अथ वाजसनेयिनां छन्दोगानाञ्च

# आह्निकपद्धतिः।

दरिभङ्गाग्रामावस्थित महाराजकुमार बाबु
वासुदेवसिंहस्य द्वितीयपत्न्याः श्रीमत्याश्चन्द्र
वतीदेव्या आज्ञया तरौनीग्रामवासिना
कर्मकाण्डोद्धारक महावैयाकरण
श्रीपरमेश्वर शर्म्मणा विरचिता,
तत्कृतयाप्रकाशाभिधया टीकया सहिता
मीमांसकप्रवर श्रीविश्वधरशर्म्म
कवीश्वर श्रीचन्द्रशर्म्म, शाब्दिक
श्रीजनार्दनशर्म्मणां साहाय्येन
लोहाग्रामवासिना
वैयाकरण श्रीनीलशर्म्मणा
संशोधिता।

---

दरभङ्गा राजधान्याम्।
[illegible]यन्त्रालये गोविन्दनारायण [illegible]
द्वारा मुद्रिता।

शाके १८१८।

धर्ममूलत्वात्तथाच याज्ञवल्क्यः । श्रुतिः स्मृतिः
सदाचारः स्वस्य च प्रियमात्मनः । सम्यक् सङ्कल्पजः
कामो धर्ममूलमिदंस्मृतमिति ॥ मनुः ॥ येनास्य
पितरोयाता येन याताः पितामहाः । तेनयायात्सतां
मार्गन्तं न गच्छन्न दुष्यति ॥ सदाचारलक्षणंविष्णुपुराणे
साधवः क्षीणदोषास्तु सच्छब्दः साधुवाचकः ।
तेषामाचरणंयस्मात्सदाचारः सउच्यते ॥ मनुः ॥
सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तन्देवनिर्मितन्देशं
ब्रह्मावर्त्तं प्रचक्षते यस्मिन्देशेय आचारः पारम्पर्य्य-
क्रमागतः । वर्णानां सान्तरालानां स सदाचारउच्यते ॥
आचारस्यावश्यकत्वमाहमनुः श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्
हि मानवः । इहकीर्त्तिमवाप्नोति प्रेत्यचानुत्त
मां गतिम् ॥ आचारः परमोधर्मः श्रुत्युक्तः स्मार्तएवच
तस्मादस्मिन्सदायुक्तो नित्यंस्यादात्मवान्द्विजः ॥ तथा ॥
आचाराल्लभतेह्यायुराचारादीप्सिताः प्रजाः । आचा-
राद्धनमक्षय्यमाचारोहन्त्यलक्षणम् ॥ सर्वलक्षणसम्पु-
ष्टस्तु सर्वदोषविवर्जितम् ॥ हारीतः आचारः परमोधर्मइति
वेदविदोविदुः । तस्मादाचारिणोलोकान् प्रवदन्तिमनी-
षिणः । याज्ञवल्क्यः ॥ उपनीयगुरुः शिष्यं
महाव्याहृतिपूर्वकम् । वेदमध्यापयेदेनं शौचाचारांश्च
शिक्षयेत् ॥ एतेनोपनयनात्प्राक् कामचारोदर्शितः ।

तथाच ॥ गौतमः ॥ प्रागुपनयनात्कामचारभक्षवादो नास्याचमनकल्पोविद्यत इति ॥ कामचारेति यथेष्टगमनभक्षणभाषणइत्यर्थः अनेन तथाचासा ध्यौलिभार्गवस्पृष्टपितमद्यपानादीनि न निषिद्धानि यानिचपुनः पातित्यनिमित्तानि मद्यपानादीनि तानि वर्ज्यानीव प्रायश्चित्तोपदेशात् कल्पतरुवादा- चमनमात्रमस्तीतिवाच्यम् ॥ ब्रह्मपुराणे । मातापित्रो रयोच्छिष्टस्वाल्लोभुञ्जन् भवेत्सुधीः ॥ एतेनान्यदीयो- च्छिष्टभोजनं दोषएव ॥ स्मृतिरपि श्रुतिमूलिकामहाजन परिगृहीतैवग्राह्या ॥ मनु ॥ यावेदबाह्याः स्मृतयो याश्चकाश्चकुदृष्टयः । सर्वास्तानिष्फलाः प्रेत्य तमोनिष्ठाहि ताः स्मृताः ॥ उत्पद्यन्ते च्यवन्ते च यान्यतोन्यानि कानिचित् । तान्यर्वाक्कालिकतया निष्फलान्यनृतानिच ॥ वेदबाह्यास्तेनवामकापा- लिकादिस्मृतयो नप्रमाणानीत्यर्थः अतएव सांख्यतत्व- कौमुद्यां प्रतिविषयाध्यवसायो दृष्टन्त्रिविधमनुमान- माख्यातम् । तल्लिङ्गलिङ्गिपूर्व्वकमाप्तश्रुतिराप्तवच- नन्त्विति कारिकाव्याख्यानावसरे आप्तग्रहणेन चायुक्ताः शाक्यभिक्षुनिर्ग्रन्थकसंसारमोचकादीनामा- गमाभासानिराकृताभवन्ति । अयुक्तत्वञ्च तेषाविगा- नाच्छिन्नमूलत्वात्प्रमाणविरुद्धार्थाभिधानात्कैश्चिदेव

म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः प्रवित्तदाशेष्यन्तीति वाचस्पतिमिश्रचरणाश्चावोचन् ॥

---

मूल ।

ब्राह्मे मुहूर्त्ते प्रातः सन्ध्यापूर्व्वदण्डद्वयात्मके विबुध्य स्थिरमना धर्म्मार्थावनुचिन्त्य शयनादुत्थाय रात्रिवासस्त्यक्त्वाऽन्यद्वस्त्रं परिधाय जलेन नेत्र-मुखञ्च प्रक्षाल्य द्विराचामेत् ॥ ततो यदि वेगास्युस्तदा नैर्ऋत्यां दक्षिणस्यां वा शयनस्थानादिषुप्रक्षेपपर्य्यन्तदेशम-तिक्रम्य गत्वा ग्रामाभ्यन्तरं गृहसमीपं विपथं गोव्रज-भस्मफालकृष्टबीजितशस्यपूर्णचत्वरश्मशानपराशु-विजलसमीपचतुष्पथवल्मीकाकाशविलयज्ञभूमिवनमोक्षि-ञ्चितपर्व्वततन्मस्तकोपजीव्यतरुच्छायादिवर्ज्जितस्थाने सह्यंते तृणादिभिर्भूमिमन्तर्द्धाय दक्षिणकर्णे ब्रह्म-सूत्रन्निधाय ॥

टीका ।

अथाचारविशेषान्तरादावुद्बोधनमाह । ब्राह्मे मुहूर्त्त इति ॥ मनुः ॥ ब्राह्मे मुहूर्त्ते बुध्येत धर्म्मार्थौ चानुचिन्तयेत् । कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थ-मेव च ॥ तन्मूलान्धर्म्मार्थोत्पादनहेतून् । वेदतत्त्वार्थं ईश्वरः न्यायप्रतीतार्थो वा तदानीम्मनसः स्थिरत्वेन तत्त्वप्रतिभासयोग्यत्वात् ॥ ततो यदीति ॥ यद्यपि

शयनादुत्थितोयस्तुकीर्त्तयेन्मधुसूदनम्। कीर्त्तनात्तस्य पापानि नाशमायान्त्यशेषतइति स्कान्दोक्तेर्हरिस्मरणानन्तरं मूत्रपुरीषोत्सर्गात्प्रागेव विष्णुस्मरणं लिखितमस्ति तथापि ग्रामाधिकमैथिलनिबन्धे पु मूत्रपुरीषत्यागानन्तरं कृतशौचः स्मृत्वाविष्णुं स्मरेदिति क्रमाभिधानादत्रापि तथैवलिखितम्॥ पश्चिमवस रेकृत्यनिबन्धे भूप्रार्थना। समुद्रवसनेदेवि पर्व्वतस्तनमण्डले। विष्णुपत्निनमस्तुभ्यं पादस्पर्शं क्षमस्व मे॥ ओं प्रियदत्तायै भुवेनमः इतिभुवंनमस्कृत्य दक्षिणं चरणं न्यसेत्॥ वेगोति॥ मूत्रपुरीषवेगवान्॥ विष्णुधर्म्मोत्तरे वेगरोधन्नकर्त्तव्यमन्यत्रक्रोधवेगतः॥ वेगरोधन्नकर्त्तव्य मितितु कान्दिगगत्त्यमिति तद्वाखात्येतत्वा त्वाखिति रघुनन्दनभट्टाचार्य्यैः वस्तुतस्तुकर्म्मविषयत्वः कातत्वस्याप्यम्॥ वेगरोधस्यायुक्तत्वमाहवैद्यकेभावप्रकाशे चायुष्यमुपसिप्रोक्तं मलादीनां विसर्जनम्। तदत्त्वकृत नाधमानोदरगौरवचारणम्॥ आदिशब्देनवातमूत्रादीनांग्रहणम्॥ तत्रैव॥ आटोपशूलपरिकर्त्तिकाच सङ्गपुरीषस्यतथोर्द्ध्ववातः। पुरीषमास्यादथवानिरेति पुरीषवेगेऽभिहतेनरस्य। परिकर्त्तिकागुदे परिकर्त्तनवत्पीड़ा। पुरीषसङ्गस्तन्निरोधः उर्द्ध्ववातउद्गारवाकृत्यम्॥ वातमूत्रपुरीषाणां सङ्गोधमानंक्रमोरुजः।

जठरे वातजाश्चान्ये रोगाः स्युर्व्वातनिग्रहात् ॥
वस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजाः । विनामो-
वंक्षणानाहः स्याल्लिङ्गेमूत्रनिग्रहात् ॥ विनामः
शरीरनम्रता वंक्षणानाहो जघनं रुसन्धे राकर्षणवत्पी-
डा । तथा न वेगितोऽन्यकार्य्यः स्यान्नवेगानीरयेद्बलात् ।
कामशोकभयक्रोधान्मनोवेगान्विधारयेत् ॥ अथ-
मूत्रपुरीषोत्सर्गविधिमाह नैरृत्यामित्यादिना ॥ विष्णु-
पुराणे । ततः कल्यं समुत्थाय कुर्य्यान्मूत्रं नरेश्वर ।
नैरृत्यामिषुविक्षेपमतीत्याभ्यधिकम्भुवः ॥ कल्यमुषः ॥-
सैवं पुरीषोत्सर्गोमिवर्देवताकपायुसम्बन्धात् नैरृत्यांश
यनस्थानात् समुत्थायेत्यनेन तस्यैवोपस्थितेः । आपस्त-
म्बः ॥ मूत्रपुरीषे कुर्य्याद्दक्षिणां दिशं दक्षिणापराम्वा गत्वे
तिशेषः । दक्षिणस्याश्चपरस्याश्चदिशोऽन्तरालं दक्षिणाप-
रा नैरृती ॥ वक्ष्यमाणस्थानान्याह ॥ पथीति ॥ यद्यपि ॥
नमूत्रं पथि कुर्व्वीतेत्यादिना मूत्रविषयएवस्थलविशेष-
निषेधश्चतुर्थाध्याये मनुनाभिहितस्तथापि पुरीषविषये-
ऽपि निषेधः कैमुतिकन्यायान्नकदाचनकुर्व्वीत विण्मूत्रस्य
विसर्जनमित्युपसंहाराच्च । पराशुचिपरीहारात्तु पञ्च-
तस्थानम् ॥ चतुष्पथेति ॥ यद्यपिपथिनिषेधादेवच-
तुष्पथराजमार्गयोर्निषेधः सिद्धस्तथापिपुनरुपादानं
राजदण्डरूपदृष्टप्रयोजनकत्वयाच मनुः ॥ समुत्सृज-

द्वाजमार्गं वरस्त्वमेध्यममापदि । स द्वौ कौपीनपर्व्वौ
दद्यादमेध्यस्थाशु शोधयेत् ॥ भाण्डगोऽङ्गारकादिः ।
चितिरग्निचयनस्थानं चिता वा ॥ पर्व्वतेति । पर्व्व-
तनिषेधेनैव सिद्धे तन्मस्तकनिषेधोऽशक्यपरिहारेपि-
पर्व्वते तन्मस्तकस्पृष्टस्य निषेधार्थः ॥ दक्षिणकर्णइति ॥
यद्यपि याज्ञवल्क्येन तु । कर्णस्थब्रह्मसूत्र इत्युक्तं तथापि
कर्णद्वानामनुक्तौ तु दक्षिणाङ्गमेवेत्यर्थेति स्मृत्यर्थसारोक्त-
परिभाषाबलात्पवित्रं दक्षिणकर्णं कृत्वा विण्मूत्रमुत्सृ-
जेदिति मिताक्षराधृतवचनाच्चावदक्षिणकर्णग्रहणम् ॥
यद्यपि यदा कदाचिद् यज्ञोपवीतं कर्णकृत्वेति सांख्या-
यनगृह्याद्युक्त्यत्वपक्षेकर्णे तद्धारणमुचितं किन्तु नि-
यम्यप्रयतो वाचं मन्त्रांस्ताम्रेवगुण्ठितइति मनुवचना
त्पृष्ठालम्बि यज्ञोपवीतकर्णनिवीतमेवेति कतिपयनिब
न्धकारमतमप्याचारात्पर्य्यपिकर्णेतद्विभ्रति मैथिलाः
प्रमादतः कर्णेतद्धारणं भट्टोजिदीक्षितकृतायां चतुर्विंश
तिमतव्याख्यायां भरद्वाजः ॥ मलमूत्रं त्यजेद्विप्रो विस्मृत्यै-
वोपवीतकम् । उपवीतमुद्धृत्य दद्यादन्यद्द्वयन्नवदेति
आपस्तम्बः । न सोपानत्कोमूत्रपुरीषे कुर्यात् ॥ इदम-
दुष्टभूमौ; कण्टकादिदुष्टभूमौ तु शरीरबाधकामौ वै
सोपानत्कस्सदा व्रजेदिति वचनात्सोपानत्कत्वमाचा-
रानुपगीतम् ॥ दिवासन्ध्यास्विति ॥ मनुः ॥ मूत्रो-

चारसमुत्सर्गं दिवा कुर्य्यादुदङ्मुखः । दक्षिणाभिमुखो रात्रौ सन्ध्यायोश्च यथा दिवा । एवञ्चैतद्विरोधात् । प्रत्यङ्मुखस्तु पूर्वाह्णेऽपराह्णे प्राङ्मुखस्तथा । उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः इति यमवचनं नादर्त्तव्यं मन्वर्थविपरीतातु या स्मृतिः सा न शस्यत इति बृहस्पतिवचनात् एवमाचारादर्शे मैथिलानामाचारोऽप्येवम् सन्ध्यामुपविश्य अर्य्यादिति देवलवचनं पीड़ितेतरपरं सन्ध्यायोश्च यथा दिवेति मनुनाऽभिधानात् ॥ मनुः ॥ छायायामन्धकारे वा रात्रावहनि वा द्विजः । यथासुखमुखः कुर्य्यात्प्राणबाधभयेऽपि च ॥ कुर्य्यादिति कामचारादन्धकाररजनितदिग्भ्रमे उभयभये चादिङ्नियमो नेत्यर्थः । पश्चाच्छौचम् लोष्टादिभिरिति ॥ हारीतः ॥ लोष्टेन प्रमृज्य काष्ठेन वा लिङ्गगुदे इति शेषः ॥ याज्ञवल्क्यः ॥ गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः । गन्धलेपक्षयकरं शौचं कुर्य्यादतन्द्रितः ॥ अभ्युद्धृतैरिति ॥ एतेन जलान्तः शौचनिषेध इति मिताक्षराकारः ॥ चतुर्विंशतिमतव्याख्यायां जलपात्राभावे तीव्रवेगाकुलस्य जलाशयात्करेणोदकग्रहणमाहवि-वत्वात् ॥ रत्निमात्रं जलं त्यक्त्वा कुर्य्याच्छौचमनुद्धृते । पश्चात्तच्छोधयेत्तीर्थमन्यथा ह्यशुचिर्भवेदिति ॥ एवमेवा-ह्निकतत्त्वमदनपारिजातादयः ॥ रत्निर्बद्धमुष्टिकरः ॥ वामहस्तेनेति ॥ देवलः ॥ धर्म्मविद्दक्षिणं हस्तमधः

शौचेन शोधयेत् । तथैव वामहस्तेन नाभिकच्छं प्रशोधयेत् ॥
प्रकृतिस्थितिरेषा स्यात्कारणादुभयक्रिया ॥ कारणा-
द्रोगादेः । उभयक्रियादक्षिणकरेणाधः कायशोधनं
वामकरेणोर्द्ध्वं कायशोधनमिति ॥ शौचमपि दिवोद-
ङ्मुखेन रात्रौ दक्षिणामुखेनैव कार्य्यमुदङ्मुखो दिवा कु-
र्य्याद्रात्रौ दक्षिणामुख इति ब्रह्माण्डपुराणात् ॥
मृदा प्रक्षालयेदिति ॥ यमः ॥ आहरेन्मृत्तिकां विप्रः
कूलात्ससिकतां तथेति ॥ विप्र इति शौचकर्म्ममात्र-
स्योपलक्षणं कूलादिति च शुचिदेशस्य अनिषिद्धमृदश्चा-
ह विष्णुपुराणे ॥

मूल ।

दक्षिणजानुपार्श्वे कमण्डलुमाधाय दिवास-
न्ध्यासूत्तराभिमुखो रात्रौ दक्षिणाभिमुख आसीनो-
मौनीभूत्वा पुरीषं कुर्य्यात् ततो लोष्टादिना लिङ्गगुदमप-
रिमृज्य गृहीतशिश्न उत्थायान्यदेशशुचिमृत्तिकां गृही-
त्वा वामहस्तेन सकृज्जलप्रक्षालितं लिङ्गमङ्गुलिविपर्व्वपु-
रिकया मृदा प्रक्षाल्य तथैव जलप्रक्षालितगुदं प्रथममर्द्ध-
प्रसृतिमितया मृदा प्रक्षाल्य प्रसृतिचतुर्थांशमितया पुन-
र्द्विवारं प्र ।

---

टीका ।

वल्मीकमूषकोत्खातां मृदमन्तर्जलात्तथा ।

शौचावशिष्टाङ्कृत्वा नादद्यात्परसम्भवाम् ॥ अत्रिः
प्राक्षालनपत्राश्च वल्मीकोत्खाताश्च पार्थिव । परित्यजेन्मृ-
दस्त्वेताः सकलाः शौचसाधने ॥ दाक्षिणात्यास्तु ॥
वापीकूपतडागेष्वन्तर्जलगताश्चापि मृद्दोषाः । वापी-
कूपतडागेषु नाहरेद्बाह्यमृत्तिकाः । अन्तर्जलगताया-
स्त्वाः परतो मर्षादन्वनादिति स्मृतिष्वलिखितव-
चनात् । एतद्दाक्षिणात्यविषयमित्याचारमयूखे नीलक-
ण्ठभट्टः ॥ मनुः ॥ यस्मिन्देशे तु यत्तोयं या चैव मृत्तिका ।
सैव तत्र प्रशस्ता स्यात्तया शौचं विधीयते ॥ गन्धलेपक्ष-
यकरमिति ॥ सर्व्वाश्रमिणां साधारणं शौचमिदं मृत्सं-
ख्यानियमस्त्वदृष्टार्थ इति मिताक्षराकारस्तद्युक्तं मृत्सं-
ख्यापरिमाणं अभिधाय न्यूनाधिकन्न कर्त्तव्यं शौचं
शुद्धिमभीप्सतेति दक्षाभिधानादिति मैथिलाः ॥
यावतामन्यते शुद्धिं तावच्छौचं विधीयते । प्रमाणन्द्रव्य-
संख्या वा न शिष्टैरुपदिश्यते इति देवलवचनं स्त्रीशूद्रा-
नुपनीतपरमित्याचारचिन्तामणिः ॥ स्मृत्यन्तरमूलोक्ता
खिन्नमृदभिधानं लेपानुवृत्तिशङ्कायां बोध्यम् ॥ मनुः ॥
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् । त्रिगुणन्तु
वनस्थानां यतीनाञ्च चतुर्गुणम् ॥ आपस्तम्बः ॥
अह्निशौचन्तु यत्प्रोक्तं निश्यर्द्धन्तु तदिष्यते । पथिपादन्तु
विज्ञेयमार्त्तः कुर्य्याद्यथाबलम् ॥ अवश्यकालोदुक्तं

चाचारादौ यथोक्तकरणाशक्तावेवमत् निशात्वादिपुर-
स्कारेणवाक्यस्य दृष्टार्थत्वे सम्भवत्यदृष्टार्थत्वकल्पनायामा
नाभावात् ॥ शौचानन्तरं करोति ॥ गोमयेनमृदावा
कमण्डलुं परिमृज्यपूर्ववदुपस्पृश्यादित्यं सोममग्निञ्चा
वीक्षेत ॥ कात्यायनः ॥ यस्मिन्स्थाने कृतंशौचं वारिणा
तद्विशोधयेत् । नशुद्धिस्तु भवेत्तस्य मृत्तिकाद्यैर्नशोधये
दिति ॥ द्विराचमेदिति ॥ तत्रमूत्रपुरीषष्ठीवनादिषुपुनरु
पस्पृशेदितिशङ्खवचनाद्द्विराचमनम् ॥ आचमनञ्च-
सव्येतरपादप्रक्षालनपूर्वकंकार्य्यमित्याह देवलः ॥ प्रथम
प्राङ्मुखः स्थित्वापादौप्रक्षालयेच्छनैः ॥ उदङ्मुखोवादै-
वत्ये पित्र्ये दक्षिणामुखइति एवं बोध्यम् ॥ वाजस-
नेयिनः प्रथमं दक्षिणम्पादंप्रक्षालयेयुस्ततोवामं छन्दो
गास्त्वादौ वामन्ततोदक्षिणंपादं तथादर्शनात् ॥
आचारचिन्तामणौ वाचस्पतिमिश्राप्येवम् ॥ छन्दोग
सूत्रे गोभिलः ॥ सव्यं पादमवनेनिजइतिसव्यम्पादंप्र-
क्षालये दक्षिणम्पादमवनेनिज इति दक्षिणम्पादम्प्र-
क्षालयेदिति ॥ वाजसनेयिसूत्रे पारस्करः ॥ सव्यम्पा
दम्प्रक्षाल्य दक्षिणम्प्रक्षालयति ब्राह्मणश्चेद्दक्षिणम्प्रथ
ममिति ॥ व्याख्यातञ्चैतत्सूत्रं हरिहरभाष्ये ॥ ततो
न्येनपादमिति विकल्पयन्समानार्पितम्पात्रोदक ॥
मादाय वामहस्तेनम्प्रक्षाल्य तत्प्रक्षालयति क्षत्रिया

भक्तानामभयङ्करोऽम्बुजपाकः सर्व्वं जन्मकृतपापं भयाद्विमुञ्चते यो
याद्वकूपपतिताद्धि गजेन्द्रं घोरतोयाद्यथा गजवरोऽधात्तथ
कृपाब्धिः ॥ श्लोकत्रयमिदं पुण्यं प्रातः प्रातः
पठेन्नरः । लोकत्रयं गुरुर्लक्ष्मीं दद्याद्दामोदरो हरिः ॥
महर्षिर्भगवान्व्यासः कृत्वेमां संहितां पुरा । श्लोकैश्चतु-
र्भिर्धर्मात्मा पुत्रमध्यापयच्छुकम् ॥ मातापितृसहस्राणि
पुत्रदारशतानि च । संसारेष्वनुभूतानि यान्ति यास्यन्ति
चापरे ॥ हर्षस्थानसहस्राणि शोकस्थानशतानि च ॥
दिवसे दिवसे मूढ माविशन्ति न पण्डितम् ॥ ऊर्द्ध्व बा-
हुर्विरौम्येष न च कश्चिच्छृणोति मे । धर्मादर्थश्च कामश्च
स किमर्थं न सेव्यते ॥ न जातु कामान्न भयान्न लोभाद्धर्मं
त्यजेज्जीवितस्यापि हेतोः ॥

टीका ।

इतिवृत्तमयं व्याख्यानाय प्रयच्छेत्तस्य शूद्रस्येत्यश्वलाय-
नगृह्यम् सर्व्वं द्विपरश्वपामिवान्यद्वारागृह्य पादप्रक्षाल-
नाभिधानाद्वान्ये यां मध्यः पादमवनेनिजन्ति विरा-
धोऽतोह्म गोयति तथा एकपदघटितमन्त्रलिङ्गविरोधा-
द्बलायुधभाष्ये चाश्वलायनीयानां स्वयमेव पादप्रक्षालनस्य
स्पष्टमभिधानाच्च ॥ आश्वलायनीयानान्तु न मन्त्रलि-
ङ्गविरोधः प्रक्षालितपादोऽर्घमञ्जलिनाप्रतिगृह्णाति
सर्वेषामन्यप्रक्षालनस्यैवाभिधानात् ॥ यथास्त्वन्य-

अनयोर्व्वैयनयोश्च बाध्यबाधकभावः सामान्यविशेषभा-
वाभावात् नापि विकल्पः दोषाष्टकप्रसङ्गात् किन्तुभ-
यमप्येवेति ॥ ब्रह्मामुरारिरिति ॥ अस्मिन्श्लोके
इन्द्रवृत्ताख्यं शास्त्रयोः करजातिः अनन्तरोदीरित लक्ष्म-
भाजौ पादौ यदीयावुपजातयस्ताः । इत्थं किला-
न्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नामेति
वृत्तरत्नाकरस्य तत्र सप्तम्यन्यपदेऽनन्तरवज्रो पेन्द्रवज्राभि
ज्ञानामपि सङ्करात्

मूल ।

धर्मो नित्यः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य
त्वनित्यः ॥ इमां भारतसावित्रीं प्रातरुत्थाय यः
पठेत् । स भारतफलं प्राप्य परं ब्रह्माधिगच्छति ॥
ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो-
बुधश्च । गुरुश्च शुक्रः शनिराहुकेतवः कुर्व्वन्तु सर्व्वे म-
मसुप्रभातम् ॥ जानामि धर्म्मं न च मे प्रवृत्तिः जानाम्य-
धर्म्मं न च मे निवृत्तिः । केनापि देवेन हृदि स्थितेन यथा
नियुक्तोऽस्मि तथा करोमि ॥ पुण्यश्लोको नलो राजा
पुण्यश्लोको युधिष्ठिरः । पुण्यश्लोका च वैदेही पुण्यश्लो-
को जनार्दनः ॥ अश्वत्थामा बलिर्व्यासो हनूमांश्च वि-
भीषणः । कृपः परशुरामश्च सप्तैते चिरजीविनः ॥
सप्तैतान्संस्मरेन्नित्यं मार्कण्डेयमथाष्टमम् । जीवेद्वर्ष-

नित्यंपुरुषषट्कं श्लोकषट्कं तर्प्पणञ्चविधाय मौनाञ्चपि
चाचात् ॥ तत्रादौ कतिपयतीर्थस्नानविधिः ॥ तत्र
गङ्गास्नानेयात्रायांमन्त्रः ॥ गङ्गेगन्तुम्प्रतीरन्ते यात्रेय-
र्द्धिंकृतामया । निर्व्विघ्नांसिद्धिमाप्नोतु त्वत्प्रसादान्म-
हेश्वरे ॥ जन्मान्तरार्ज्जितम्पापं स्वल्पम्वा यदिवाबहु ।
गङ्गादेवीप्रसादेनसर्व्वंयात्वतिसंक्षयम् ॥ दर्शने ॥
अद्यमेसफलंजन्मजीवितञ्चसुजीवितम् । साक्षाद्ब्रह्म-
स्वरूपान्त्वाम्पश्यामिनिजचक्षुषा ॥ प्रणाम ॥
देवित्वद्दर्शनादेव महापातकिनोमम । विनष्टमभवत्पा
पञ्जन्मकोटिसमुद्भवम् ॥ प्रवेशे ॥ गङ्गेदेविजगन्मातः
पादाभ्यांसलिलन्तव । स्पृशामीत्यपराधम्मे प्रसन्ना
क्षन्तुमर्हसि ॥ स्वर्गारोहणसोपानैस्त्वदीयमुदकंशिवे ।
अतः स्पृशामि पादाभ्यांगङ्गेदेविनमोस्तुते ॥ पङ्कलेपने ॥
त्वत्कर्द्दमैरतिस्निग्धैः सर्व्वपापप्रणाशनैः । मयाचि-
लिप्यतेगात्र मातर्म्मे हरपातकम् ॥

टीका ।

पिङ्गलसूत्र वृत्तरत्नाकरादि टीकास्वप्येवम् ॥
अतएव प्रबोधचन्द्रोदयनाटके । विद्याप्रबोधोदयजन्म
भूम्मिर्वाराणसी ब्रह्मपुरीनिरत्यया । अतः कुलच्छेदविधि
र्व्विधित्सुर्निवस्तु मर्वकृति नित्यमेव सङ्गतिस्त्रीति
इन्द्रवज्रोपेन्द्रवज्रा संयुक्तेन्द्र वंशानामुपजातिः संयुक्ते-

शरीरचिन्तां निर्व्वर्त्त्य कृतशौचविधिर्द्विजः । प्रातः
सन्ध्यामुपासीत दन्तधावनपूर्व्विकाम् ॥ अत्रवाचि
सन्ध्यायान्तु दन्तधावनस्यनाङ्गत्वं मुखेपर्य्युषिते
नित्यंभवत्यप्रयतोनरः । तस्मात्सर्व्वप्रयत्नेन भक्षये
द्दन्तधावनमितिदक्षशातातपेनाचमनवत्स्वतन्त्रस्यैव शु-
द्धिहेतुतयाभिधानात् एवञ्च स्नानं प्रत्यङ्गत्वं छायादि-
निच्छन्दोगपरिशिष्टेऽपि कालाद्येकसमव्ययेऽपि नाङ्गाङ्गि-
भावः यथाऽऽरम्भणीयाया इष्टेर्दर्शपौर्णमासप्राक्काल-
त्वेऽपि नमः यथावाज्योतिष्टोमप्रकरणे दर्शपूर्णमा-
साभ्यामिष्ट्वा सोमेनयजेतेत्यत्र नमः ॥ तथाच
चतुर्थे जैमिनिसूत्रम् ॥ उत्पत्तिकालविषये स्याद्वा-
क्यस्यप्रधानत्वादिति ॥ किञ्चपूर्व्वकाले क्त्वाविधौवति
नाङ्गाङ्गिभावे तथाच पाणिनिसूत्रम् ॥ समानक-
र्तृकयोः पूर्व्वकालइति ॥ मिताक्षरायांविष्णुः ॥
कण्टकिक्षीरवृक्षोत्थंद्वादशाङ्गुलमव्रणम् । कनिष्ठिका
ग्रवत्स्थूलंपूर्व्वार्द्धकृतकूर्च्चकम् ॥ दन्तधावनमुद्दिष्ट
जिह्वोल्लेखनिका तथेति ॥ अत्रवृक्षोत्थमित्यनेन
तृणलोष्टाङ्गुल्यादिनिषेधः ॥ दन्तकाष्ठप्रमाणं स्मृति-
सङ्ग्रहायाम् ॥ द्वादशाङ्गुलंविप्राणांक्षत्रियाणान्नवा-
ङ्गुलम् । अष्टाङ्गुलन्तुवैश्यानां शूद्राणान्तु षडङ्गुलम् ॥
चतुरङ्गुलमानेननारीणाम्पिविधीयते । अलाभप्रभवा-

चास्य षडङ्गुलमुदाहृतमिति ॥ दशाङ्गुलेन राजन्य इति
पूर्वभाष्ये हरिहरः ॥ तत्करणमन्त्रमाह । आयुर्बल-
मिति ॥ यद्यपि हलायुधीयेनागदेवीये च अन्नाद्याय
व्यूहध्वमिति वैदिकमन्त्रो लिखितस्तथापि वाजसनेयिनां
समावर्त्तने दन्तधावने तन्मन्त्रस्य पारस्करेण विनि-
योगादन्यदीयमेव सर्व्वशाखिसाधारणः पौराणिकोमन्त्रः
पठितव्यः ॥ अतएव प्रामाणिकमैथिलगौडदाक्षिणा-
त्यनिबन्धेष्वयमेवमन्त्रो दृश्यते ॥ षष्ठीति पोषणार्थस्य
धातोरूपम् ॥ दन्तकाष्ठालाभ इति ॥ तथाचनरसिं-
हपुराणम् ॥ अलाभे दन्तकाष्ठानाम्प्रतिषिद्धे तथादिने ।
अपाम्द्वादशगण्डूषैर्मुखशुद्धिर्विधीयते इति ॥
अलाभेसर्व्वथाऽलाभे विहितकाष्ठाद्यलाभे च ॥ अत्र यं
व्यवस्था सति सम्भवे विहितमुपादेयं तदलाभे विहित-
निषिद्धभिन्नरहि निषिद्धन्तु सर्व्वथैव नोपादेयं दन्तधा-
वनकरणत्वं न प्रसक्तकाष्ठसामान्यं आम्रातकापामार्ग
शिरीषखादिरातिमिड्डीककदम्बोदुम्बरादिकाष्ठविशेषवि-
धिसङ्गिम व शेषनिषेधमिदं पलाशतिन्दुकमिन्दुवारि-
काबदरीशमीशिंशपा कपित्थहरीतक्यामलकविभीत-
कपिप्पलकदलीशाल्मलिकाष्ठादीनाञ्च तः स्मृतिषु-
निषेधोऽत्यन्तानिषेधार्थत्वं नप्रतिनिधिविधयाप्युपादान-
वारकः । यथामौद्गचरुवद्भवतीत्यनेनैवान्यनिषेध

तन्मन्त्रान्वयः । अत एव यदि मोमन्त्रविन्देत्य निका-
मभिपूजयादित्यादौ श्रौतेऽश्रौते वा प्रतिविधौ समान
विधित्वप्रतिपादकः प्रतिनिषिद्धतद्वत नियमार्थागुण-
श्रुतिरितिसूत्रद्वयमिदः प्रतिनिध्यधिकारश्च सिद्धान्तो-
ऽयमिमं विषयीकरोतीति ॥ दन्तधावनविषये बहु-
विधिनिषेधवचनानि काम्यकाष्ठानि च वैद्यकेषु
स्मृतिषु च लिखितानि तानि ग्रन्थगौरवभयान्नोपन्य-
स्तानि ॥ प्रतिपदादिनानि चतुर्दश्यष्टम्यादिपर्व्वदिव-
सानीति ॥ अथ प्रातः स्नानाद्याह ॥ शक्तश्चेति ॥
छन्दोगपरिशिष्टकात्यायनः । यथाऽहनि तथा प्रातर्नि-
त्यं स्नायादनातुरः । दन्तान्प्रक्षाल्य नद्यादौ गेहे चेत्त-
दमन्त्रवत् ॥ अनातुरः स्नानमव्यंग नीरव्याधिरहितः
शक्तश्चेत्यर्थः एवं बोध्यम् ॥ शक्तेन मध्याह्नस्नानवत्प्रातः
स्नानमपि प्रत्यहं कार्य्यमशक्तस्तु मार्ज्जनादिना शौचं कृत्वा
सन्ध्यावन्दनादि ॥ योगियाज्ञवल्क्यः ॥ उभय-
सन्ध्यं च स्नातव्यं ब्राह्मणैर्गृहाश्रमिभिः ॥ तिसृष्वपि च
सन्ध्यासु स्नातव्यन्तु तपस्विना । उभसन्ध्यं प्रातर्मध्या-
ह्ने च तपस्विना यतिना वानप्रस्थेन च ॥ प्रातः
स्नानमपि द्विविधं नित्यं काम्यञ्च नित्यमुक्तं काम्यं
माघादौ मासविशेषक्रियमाणं तत्र नित्यंप्रातः स्नानस-
न्ध्योपासनानन्तरं स्वकल्पोक्तविधिविस्तारेणैव कर्त्तव्य

## टीका ।

मितरत्काम्यमिति द्वैतनिर्णये सप्तमाग्रमध्यभावि-
वाचस्पतिमिश्रैः । रत्नाकरोऽप्येवम् ॥ ततोऽष्टधावि-
भक्तस्याह्नः प्रथमया मार्त्तण्डक्रमेण कृत्यानि कुर्य्यात्तत्र
आद्ये केशप्रसाधनं सौवीराञ्जनादिकरणं माङ्गल्यवस्तु-
वीक्षणं कुर्य्यादभिवादनञ्च द्वितीयेऽध्ययनाध्यापनादि-
कुशपुष्पाद्याहरणञ्च तृतीये कुटुम्बभरणार्थं नृपोपस-
र्प्पणादि चतुर्थे मध्याह्नस्नानादिति दक्षमध्याह्नइति
व्यासः ॥ स्नानमर्घ्यादिकं कुर्य्यात्सुजीर्णेऽन्ने निरामयः ॥
दक्षः ॥ चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत् ॥
शातातपः ॥ वल्मीकाखूत्कराद्वारिजलात्पथिरथ्ययोः
कृतशौचावशिष्टात्तु न ग्राह्याः सप्त मृत्तिकाः ॥ वेदात्कु-
ह्याद्देः पश्चिमस्योक्ताः सामीप्येन तथा ॥ तथा ॥
शुष्काद्देशात्तु सङ्ग्राह्याः शर्कराश्मादिवर्जिता ।
रक्ता गौरी तथा कृष्णा मृत्तिका त्रिविधा स्मृतेति ॥ चा-
द्राविति ॥ तीर्थस्नानस्याभ्यर्हितत्वात्सर्व्ववर्णसर्व्व-
शाखिसाधारण्याच्च तदभावः ॥ तीर्थं त्वन्योद्देशेनापि-
कुशप्रतिकृतिं कृत्वा स्नापयेत् ॥ पैठीनसिः ॥ प्रतिकृतिं
कुशमयीं तीर्थवारिणि मज्जयेत् । मज्जयेत्तु यमुद्दिश्य
सोऽष्टभागफलं लभेत् । वस्तुगौडनिबन्धे ॥ कुशो-
सि कुशपुत्रोऽसि ब्रह्मणा निर्मितः पुरा । त्वयि स्नाते

## टीका

सतुस्नातो यस्त्वर्थयन्थिवस्त्वनमिति तन्मूलमनेनस्मृतिलि-
खितः सर्वनिर्मूलत्वान्मैथिलनिबन्धकारैरनादृतः ॥
तीर्थं विनामनिरर्थकम् ॥ स्नानायोग्यकाले तीर्थप्राप्तौ
गङ्गायामपिमार्जनमात्रमाचरन्तिवृद्धाः । अन्ये तु
स्नानत्वप्रमाणमित्याहुः ॥ दिवारात्रौ च सन्ध्यायां
गङ्गायाञ्च प्रसङ्गतः स्नात्वाश्वमेधजं पुण्यं गृहेऽप्युद्धृत्य
तज्जलैरिति ब्रह्मपुराणवचनम् अतएवमहाभारत
आदिपर्व्वण्यङ्गारपर्णगन्धर्वेण रात्रौ गङ्गायामर्जुनस्य
प्रवेशः प्रतिषिद्धोऽर्जुनेनचोक्तं समुद्रे हिमवत्पार्श्वे
नद्यामस्यामिदुर्मतौ । रात्रावहनि सन्ध्यायां कस्य गुप्तः
परिग्रहः ॥ भुक्त्वा वा यदि वाऽभुक्त्वा रात्रावावर्जनिवेषर ।
नकालनियमोऽप्यस्ति गङ्गां प्राप्य सरिद्वरामिति ॥
मिथिलादेशीयतीर्थस्नानादिविधिर्मैथिलमहाराजवंश्य
श्री मत्लापतिसिंहमहोदयप्रकाशनकारिते मिथिला
तीर्थप्रकाशेद्रष्टव्यः ॥ सङ्कल्पाति ॥ गङ्गास्नानादि
सङ्कल्पाश्चस्मत्कृतौ गणपत्युपाध्यायादिकृतेषु गङ्गापत-
लकेविशेषतानिरुपितादिति ग्रन्थगौरवभयान्न विलिखि-
ताः ॥ यद्दीप्सितिः ॥ योगियाज्ञवल्क्यः ॥ तूष्णीमेवावगा-
हेत यदास्यादशुचिर्नरः । आचम्य च ततः पश्चा-
त्स्नानं विधिवदाचरेत् ॥ आत्ममर्न्दयित्वाष्मिति ॥ यद्यपि-

टीका ।

यद्दैवरजोदोषो न विद्यते ॥ मदनपारिजाते निगमः ॥ न दुष्येत्तीरवासिनामिति ॥ एतच्च कूपतडागाद्यभाव इति प्रतिभाति ॥ योगियाज्ञवल्क्यः ॥ अथ । ग्रामाग-ताचावीनद्याः प्रथमवेगिकाः ॥ प्रक्षोभितास्तथैवापो याश्च तीर्थादिनिःसृताः ॥ प्रथमवेगिकाः । शुष्कनद्यां प्रथमप्रवाहरूपाः प्रक्षोभिताः आविलीभूताः तीर्थादिभिः सृताः गङ्गाप्रवाहादिभिर्भिन्नाः ॥ मनुः ॥ न स्नानमाचरेद्भु-क्त्वानातुरो न महानिशि । न वासोभिः सहाजस्रं नाविज्ञा-ते जलाशये ॥ अजस्रमनवरतम् । अनेन च रोगग्रस्तजा-ड्यादिप्राप्तमेतत्स्नानं निषिध्यते तेनैकस्मिन्दिने नाना-तीर्थप्राप्तौ तत्तन्निमित्तकं नानास्नानं कर्त्तव्यमेव । अतएव गयादौ तथाचरणं शिष्टानाम् ॥ कृत्रिमजलाशये-कर्त्तव्यमाह परखानितइति ॥ मनुः ॥ परकीयनिपानेषु न स्नायाद्वै कदाचन । निपानकर्त्तुः स्नात्वा हि दुःकृतांशे नलिप्यतइति ॥ अत्र परकीयं परखानितमित्यनुवरत-भूतं निपानकर्त्तुरितिवाक्यशेषात् ॥ याज्ञवल्क्यः । पञ्चपिण्डाननुद्धृत्य न स्नायात्परवारिष्विति ॥ पिण्ड-श्चात्र योग्यबिल्वप्रमाणकः पिण्डपदाभिधेयस्तथैवा-वचनादितिकिंगर्भमिश्राः हस्तद्वयेनयावदाकृष्यते तत्प्र-माणइति शङ्करमिश्राः ॥

## मूलम् ।

ततः संकल्प्य स्नायात्तत्र मन्त्रः । ब्रह्मस्वरूपि गङ्गे स्नानमाचर्य्यते मया । त्वत्तीर्थे [illegible] सेवितार्थे यथोक्तफलदा भव ॥ गङ्गासागरसङ्गमे मन्त्रः ॥ त्वमेव सरितान्नाथस्त्वन्तीर्थसरिताम्वर । उभयोः सङ्गमे स्नात्वा मुञ्चामि दुरितानि वै । सागरस्नाने ॥ त्वमग्निर्द्विपदान्नाथ रेतोधाः कामदीपनः । प्रधानः सर्व्वभूतानां जीवानाम्प्रभुरव्ययः । अमृतस्यारणिस्त्वं हि देवयोनिरपाम्पते । वृजिनं हर मे सर्व्वतीर्थराजनमोऽस्तु ते ॥ ब्रह्मपुत्रस्नाने ॥ ब्रह्मपुत्र महाभागशान्तनोः कुलनन्दन । अमोघागर्भसम्भूत पापं लौहित्य मे हर ॥ करतोयास्नाने ॥ करतोये सदानीरे सरिच्छ्रेष्ठे सुविश्रुते । पौण्ड्रान्प्लावयसे नित्यं पापं हर करोद्भवे ॥ कौशिकीस्नाने ॥ गाधिराजसुते देवि विश्वामित्रमुनेःस्वसः । ऋचीकभार्य्ये सत्यार्य्ये पापं मे हर कौशिकि ॥ एते च तीर्थविशेषमन्त्राः सदाचारपाठाः आगमानामर्थाभिनिवेशइति न्यायात् । यदा तु स्नानकर्त्ताऽशुचिः स्यात्तदा प्रथमं तूष्णीमवगाह्याचम्य विधिवत्स्नानं कुर्य्यात् । शूद्रस्तु तीर्थस्नानकृत्यपौराणिकमन्त्रं वा न मर्हति मन्त्रं च आ मायात् ॥ इति सामान्यस्नानविधिः ॥ अथवाऽऽत्मने-

मूलम् ।

विनाभ्यङ्गपुराणोक्तस्नानविधिः ॥ नद्यादिखातेषु तदभावे परखानित तडागादौ पञ्चपिण्डानुद्धृत्य स्वखातेऽनुद्धृत्यैव नाभिमात्रं जलं प्रविश्य दर्भपाणि-राचान्तः ओं नमो नारायणाय इति मूलमन्त्रं च चतु-र्हस्तचतुरस्रतीर्थं प्रकल्प्य ओं विष्णोः पादप्रसूतासि वैष्णवी विष्णुपूजिता । पाहि नस्त्वेनसस्तस्मादाजन्म-मरणान्तिकात् ॥ तिस्रः कोटीर्द्धकोटी च तीर्थानां वायुरब्रवीत् । दिवि भुव्यन्तरीक्षे च तानि ते सन्ति जाह्न-वि ॥ नन्दिनीत्येव ते नाम देवेषु नलिनीति च । वृन्दा पृथ्वी च सुभगा विश्वकाया शिवामिता । विद्या-धरी सुप्रसन्ना तथा लोकप्रसादिनी । क्षेम्या च जाह्नवी चैव शान्ता शान्तिप्रदायिनी । एतानि पुण्यनामानि स्नानकाले प्रकीर्त्तयेत् । भवेत् सन्निहिता तत्र गङ्गा त्रि-पथगामिनी ॥ इत्यभिमन्त्र्य गङ्गामावाह्य ओं नमो नारायणाय इति मन्त्रं सप्तकृत्वोऽभिजप्य करसम्पुट-योजितजलं त्रिश्चतुष्पञ्चकृत्वः सप्तकृत्वो वा मूर्ध्नि कृत्वा ओं अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे । मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ॥ उद्धृता-सि वराहेण कृष्णेन शतबाहुना । नमस्ते सर्वलोकानां प्रभवारणि सुव्रते ॥ पाद[illegible]गात्राणि सर्वपाप

ष्टौ । अवयक्ष्व नो वरुणॐ रराणो वीहि मृडीकॐ सुहवो न एधि ॥ ४ ॥ ओं मापो मौषधीर्हिॐसीर्धाम्नो

मूलम् ।

धाम्नो राजंस्ततो वरुण नो मुञ्च । यदाहुरघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च ॥ ५ ॥ ओं उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमॐ श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ ६ ॥ ओं मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत । अथो यमस्य पड्वीशात् सर्व्वस्माद्देवकिल्विषात् ॥ ७ ॥ ओं अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अवदेवैर्देवकृत-मेनोयासिषमव मर्त्त्यैर्मर्त्त्यकृतम्पुरुराव्णो देवरिषस्पाहि ततः स्रोतोऽभिप्रवाहाभिमुखः स्थिरे च सूर्य्याभिमुखो मौनी गायत्रीं त्रिर्मज्जन् । ततो हिराचम्य वक्ष्यमाणमन्त्रैः प्रत्यृचं कुशत्रयेण शिरसि मार्ज्जनं कुर्य्यात् ॥ ओं भूर्भुवःस्वः तत्सवितुर्व्वरेण्यम्भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ओं आपो हि ष्ठा मयोभुव-स्तान ऊर्ज्जे दधातन । महे रणाय चक्षसे ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ ओं इदमापः प्रवहतावद्यञ्च मलञ्च यत् यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम् । आपो

मूलम् ।

रिमाआपोहविष्म्र ॥ २ ॥ आविशासति ।
हविष्मान्देवोअध्वरोहविष्मान् ॥ २ ॥ अस्तुसूर्य्यः ॥
ओं देवीरापो अपान्नपाद्योवऊर्म्मिर्हविष्यइन्द्रियावा-

मूल ।

न्मदिन्तमः । तन्देवेभ्योदेवत्राद्त्तशुक्रपेभ्योयेषांभाग-
स्थस्वाहा ॥ ओं कार्षिरसि, समुद्रस्य त्वाक्षित्या
उन्नयामि । समापोअद्भिरग्मतसमोषधीभिरोषधीः ॥
ओं अपोदेवामधुमती रगृभ्णन्नूर्जस्वतीराजस्वश्चिता-
नाः । याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनय
न्नत्यरातीः ॥ ओं द्रुपदादिवमुमुचानः स्विन्नःस्नातो
मलादिव । पूतम्पवित्रेणेवाज्यमापः शुन्धन्तुमैनसः ॥
ओं शन्नोदेवीरभिष्टय आपोभवन्तुपीतये । शंयोरभि
स्रवन्तुनः ॥ ओं अपाᳬरसमुद्वयसᳬसूर्ये सन्तᳬ
समाहितम् । अपाᳬरसस्ययोरसस्तंवोगृह्णाम्युत्तमम् ॥
ओं अपोदेवीरुपसृजमधुमतीरयक्ष्माय प्रजाभ्यः । तासा
मास्थानादुज्जिहतामोषधयःसुपिप्पलाः ॥ ओं पुनन्तु
मापितरःसोम्यासः पुनन्तुमापितामहाः पुनन्तुप्रपिता
महाः । पवित्रेणशतायुषा ॥ ओं पुनन्तुमापितामहाः
पुनन्तुप्रपितामहाः । पवित्रेणशतायुषाविश्वमायुर्व्य-
श्नवै ॥ ओं अग्नआयूᳬषि पवसआसुवोर्जमिषञ्चनः ।

मूलम् ।

आरेवाधस्वदुष्क,नाम् ॥ ओं पुनन्तुमादेवजनाः पुनन्तुमनसाधियः । पुनन्तुविश्वाभूतानिजातवेदः पुनीहिमा ॥ ओं पवित्रेणपुनीहिमा शुक्रेणदेवदीद्यत् । अग्ने क्रत्वाक्रतूं १ ॥ रनु ॥ ओं यत्तेपवित्र मर्चिष्यग्ने विततमन्तरा । ब्रह्मतेनपुनातुमा ॥ ओं पवमानःसोअद्यनः पवित्रेणविचर्षणिः । यः पोतासपुनातुमा ॥ ओं उभाभ्यांदेवसवितः पवित्रेणसवेनच । माम्पुनीहिविश्वतः ॥ ओं वैश्वदेवीपुनतीदेव्यागाद्यस्यामिमाबह्व्यस्तन्वोवीतपृष्ठाः । तयामदन्तः सधमादेषुवयंस्यामपतयोरयीणाम् ॥ ओं चित्पतिर्मापुनातुवाक्पतिर्मापुनातु देवोमासवितापुनात्वच्छिद्रेण पवित्रेणसूर्यस्यरश्मिभिः । तस्यतेपवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम् ॥ ततः पुनरप्योङ्कार व्याहृतित्रयसहितगायत्र्या कुशत्रयेणमार्जनंकुर्यात् ॥ ततः पूर्ववद्दिमग्न्ये ऋतञ्चेत्यादिमंत्राष्टकेनाष्टकृत्वः शिरसि जलंचस्तं नचिपेत् । ततोजलमग्नः सन्नघमर्षणं द्रुपदामायंगोरितिनाहर्चंत्रिरावर्तयेत् ओं भूरित्यादि स्वरोमित्यन्तवच्यमाणमन्त्रेण त्रिरावृत्त्ये प्राणायाम त्रयंवाकुर्यादोङ्कारंवात्रिः पठेद्विष्णुं वास्मरेत् ॥ इति सात्यायनोक्तस्नानकल्पः ॥ ततो जलादुत्तीर्यस्नानव-

मूलम् ।

स्नातिरिक्तवस्त्रं च पाणिनाच गात्रजलमपमृज्य शुष्क-
वस्त्रं च शिरोजलंचसंशोध्य धौतेवाससीपरिदध्यात् ॥
अथ दैवाद्यज्ञोपवीतस्य तदेकदेशस्य वाविनाशेमंत्रेणनूत-
नं तद्गृहीत्वाप्राचीनमप्सुक्षिप्त्वाचामेत् ॥ मन्त्रोयथा ॥
ओं यज्ञोपवीतं परमंपवित्रं प्रजापतेर्यत्सहजंपुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुञ्चशुभ्रं यज्ञोपवीतम्बलमस्तुतेजः ॥
अथात्र श्रीखंडादिचन्दनेनतिलक करणमाचारात् ॥

टीका ।

पराशरः ब्राह्मणंस्नातुमायान्तमनुगच्छन्तिदेवताः ।
पितरश्चमहाभागा वायुभूताजलार्थिनः ॥ निराशाः
पितरोयान्तिवस्त्रनिष्पीडनेकृते । तस्मान्निष्पीडयेद्वस्त्रं
नाकृत्वापितृतर्पणम् ॥ जलमध्येतुयः कश्चिद्द्विजा-
तिर्ज्ञानदुर्बलः । निष्पीडयतितद्वस्त्रं स्नानमस्यवृथा-
भवेदिति ॥ अतएवतर्पणोत्तरंवस्त्रं प्रक्षाल्येतिमू-
लेवक्ष्यते ॥ यज्ञोपवीतस्येति ॥ मनुः ॥ मेखला
मजिनन्दंडमुपवीतं कमण्डलुम् । अप्सुप्रास्यविनष्टा
निगृह्णीतान्यानिमन्त्रवत् ॥ एकदेशस्येति ॥ तद्वि-
नाशेपियातयामतया ननवेनसंयोगः किन्तुत्यागएव
मन्त्रादिसंस्कारस्यविनाशार्थ इतिभावः ,एवमेवहरिहर
भाष्यम् ॥ श्रीखंडादिचन्दनेनेति ॥ वेदाचीदिनच-

टीका ।

र्षायाम् ॥ कुंकुमंचन्दनं चापिकृष्णागुरुविमिश्रितम् । उष्णंवातकफघ्नं मिशीतकालेनदिष्यते ॥ चन्दनंघन-सारेण बालकेनचमिश्रितम् । सुगन्धिपरमंशीतमुष्ण-कालेतदिष्यते ॥ घनसारः कर्पूरः, वालकोवीरम् चन्दनंघुसृणोपेतं मृगनाभिसमायुतम् । नचोष्णंनच वाशीतं वर्षाकालेतदिष्यते ॥ घुसृणंकुंकुमंमृगनाभिः कस्तूरी ॥ भारते ॥ गंगातीरसमुद्भूतांमृदंमूर्ध्नाविभ-र्तियः । बिभर्तिरूपंसोर्कस्यतमोनाशायकेवलम् ॥ वैष्णवानांगोपीचन्दनमपिप्रशस्तम् । शंखचक्रादिमुद्रां धारणान्तुवैदिकमार्गभ्रष्टरम् ॥ शिवकेशवयोरंका-ञ्छूलचक्रादिकान्द्विजः । नधारयेतमतिमान्वैदिकेव र्त्मनिस्थितः इत्याश्वलायनोक्तेः एवमेवदाक्षिणात्यनि बन्धारोपि ॥ संग्रहे ॥ स्नात्वापुंड्रंमृदाकुर्याद्धुत्वा चैवतुभस्मना । देवानभ्यर्च्यगंधेनसर्वपापापनुत्तये ॥ अक्षेनतिलकंकुर्याज्जलान्तः कर्मसिद्धयेदिति ॥ कनिष्ठा ङ्गुल्यातिलकमप्रशस्तं नखेनंनिषिद्धमिति ॥ अथ संध्योपासनमिति ॥ अथेत्यस्यस्नानानन्तरमित्यर्थः । ननुतर्पणस्यस्नानाङ्गतया तयोर्मध्येसन्ध्यानुष्ठाने ऽनङ्ग व्यवायापत्तिरितिचेन्नस्यम् उत्तीर्यधौतेवाससोपरिधा यमृदोरुकरौप्रक्षाल्याचम्य तिरायम्यासूनित्यादिका

टीका ।

त्यायनसूत्रानुरोधेन तथानुष्ठानात् । यदातु हस्तीयप्र
हरैर्दिनैरात्रौ वा यस्य, न संध्यावन्दनप्रसक्तिस्तस्याना
व्यवस्थितकालमेवतर्पणम्, एवं सायं सूर्ये यासेऽपि सायं
संध्यायाः स्नानतर्पणयोर्मध्ये कात्यायनेनानुपदेशात्
उक्तसूत्रादेव वाजसनेयिनां स्थलसन्ध्यावन्दनमेव मुख्यं
स्थलाशौचं पश्चेत्तु स्नात्वा, यत्राशुचिस्थलं वाप्यादुदकैः
देवताः पितॄन् । तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठित-
मितिवचनाज्जले उपस्थानपर्यन्तां सन्ध्यां कृत्वा पितॄन्
संतर्प्य जलात् तीर्ये गायत्रीजपो ब्रह्मयज्ञश्च कार्यः । सा-
यं सन्ध्या तु सर्वेदिनामपि स्थलएव तदानीं गृहस्थस्य
स्नानानधिकारं शाट्ट्रं वासस्त्वाभावां च्च व्यावस्त्रे च जले.
क्रियानिषेधाच्च ॥ अत्र संध्यापदं दर्शपौर्णमासादिवत्त
त्कालकर्तव्यस्य प्राणायामादिसूर्योपस्थानान्तकर्मणोना-
मधेयं तत्प्रख्याधिकरणसिद्धान्तात् । तत्रोपस्थानं
प्रधानमितराण्यङ्गानि, अतएव रणोद्यतैः पांडवै
रसामर्थ्यादङ्गाननुष्ठानेपि सूर्यएवोपतस्थे, तथाच
भारतम्, ते तथैव महाराज दंशितारणमूर्द्धनि ।
संध्यागतं सहस्रांशुमादित्यमुपतस्थिरे इति ॥ तैत्तिरी-
यब्राह्मणं च ॥ उद्यन्तमस्तं यान्तमादित्यमभिध्यायन्
कुर्वन् ब्राह्मणोविद्वान् सकलं भद्रमश्नुते असावादित्यो

टीका ।

ब्रह्मेति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेदेति ॥ तेन कर्मणा उपासनं वन्दनं संध्योपासनम् ॥ अथवा । ब्रह्मणोपासिता संध्या विष्णुना शंकरेण च । कस्तां नोपासयेद्देवीं सिद्धिकामो द्विजोत्तम इति याज्ञवल्क्येन देवीत्वेन कीर्तनात्संध्यारूपदेवतायाः उपासनमाराधनं संध्योपासनं सा च देवता सूर्यरूपैव, संधिकालोपास्यत्वात्संध्येति माधवः । सम्यग्ध्यायत्वात्संध्येति नृसिंहः ॥ दक्षः ॥ उपास्तेयस्तु नो संध्यां ब्राह्मणो हि विशेषतः । सजीवन्नेव शूद्रः स्यान्मृतः श्वा चाभिजायते ॥ संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते किंचिन्न तस्य फलभाग्भवेत् ॥ छन्दोगपरिशिष्टम् ॥ एतत्संध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम् । यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥ विष्णुपुराणे ॥ सर्वकालमुपस्थानं संध्ययोः पार्थिवेष्यते । अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥ विभ्रमश्चित्तविक्षेपः मेघादिना संध्यासमयाज्ञानं वा ॥ उपक्रमकालमाह संवर्तः ॥ प्रातः संध्यां सनक्षत्रामुपासीत यथाविधि । सादित्यां पश्चिमां संध्यामर्धास्तमितभास्कराम् ॥ आदित्यपद्मवल्लोहितमंडलपरम् ॥ समाप्तिकालमाह याज्ञवल्क्यः ॥ जपन्नासीत सावित्रीं प्रत्यगातारकोद

टीका।

यात्। संध्यांप्राक्प्रातरेवंहितिष्ठेदादित्यदर्शनात्॥ प्रत्यक् पश्चिमाभिमुखः। आसीतेति। सायंजपमुप विशन्कुर्यात्। तिष्ठेदिति। प्रातर्जपमुत्तिष्ठन्कुर्या देवंमध्याह्ने पि तिष्ठेदादर्शनात्पूर्वांमध्यमामपिशक्तित इतिछन्दोगपरिशिष्टात्॥ मनुः॥ ऋषयोदीर्घ संध्यत्वाद्दीर्घमायुरवाप्नुवन्। प्रज्ञांयशश्चकीर्तिंचब्रह्म वर्चसमेवच॥ दीर्घसंध्यत्वंजपातिशयात्॥ काल परिमाणमाह योगियाज्ञवल्क्यः॥ ह्रासवृद्धीतुसततं

मूल।

अथ संध्योपासनम्॥ वाजसनेयिनां तत्प्रयोगस्तु, वामपाणौत्रीन् कुशान् दक्षिणपाणौ पवित्रंकुशद्वयंच धृत्वा सप्रणवगायत्र्याशिखां बद्ध्वा शान्यभिमुखआचम्य श्रीखण्डचन्दनंचकृत्वा, अघमर्षणसूक्त।

टीका।

दिवसानां यथाक्रमम्। संध्यामुहूर्तमात्रंतु ह्रासवृद्धौ चसास्मृता॥ मुहूर्तेदंडद्वयम्। एवंच सर्वर्तुषुप्रातः सायंसंध्येदंडद्वयात्मिकेभवतः॥ मध्याह्नसंध्यातुम ध्याह्नकालादूर्द्ध्वं कार्या उत्तीयधौते वाससीपरिधायै त्यादिकात्यायनवचनात्॥ गुणफलमाहशातातपः॥ गृहेषु प्राकृतो संध्यागोष्ठेशतगुणास्मृता। नदीषु

टीका ।

अतस्ताश्वत्थी अनन्ताग्निश्चसंनिधौ ॥ प्राकृतीएकगुणा ॥ तथा ॥ अन्नतंमद्यमद्यंच दिवामैथुनमेवच । पुनातिब्रह्मलस्यान्न बहिःसंध्याद्युपामिता ॥ वह्निनाच्छादितस्यामिप्रागग्रादौ ॥ आपद्यप्यन्यशक्तौच संध्यांकुर्वीतमानसीमितिस्मृतिमंजूषा लिखितवचनादप्याद्दौ मानसीमपिसंध्यामिच्छन्ति ॥ वामेपाणाविति ॥ छन्दोगपरिशिष्टे ॥ सव्ये पाणौकुशान्कृत्वा कुर्यादाचमनक्रियामिति ॥ पवित्रमिति ॥ तल्लक्षणं छन्दोगपरिशिष्टे । अनन्तर्गर्भिणंसाग्रंकौशंद्विदलमेवच । प्रादेशमात्रंविज्ञेयंपवित्रंयत्रकुत्रचिदिति ॥ अनन्तर्गर्भिणमन्तर्गर्भिव्यतिरिक्तं तथाच गर्भगर्भिअन्तर्गर्भिचत्वक्काचतुर्थंयाद्यमित्यर्थः । यत्तुकान्दसत्वात्पुंलिंगनिर्देशइति वाचस्पतिमिश्राश्वाहुस्तन्नसम्यक्तोच-तेविज्ञेयमित्यस्यकर्मप्रत्ययान्तत्वे नतत्समानाधिकरणे द्वितीयायाअसंभवा त्प्रथमायांपुंस्यनन्तर्गं ।

मूलम् ।

स्याघमर्षण ऋषिरनुष्टुप्छन्दोभाववृत्तोदेवताऽश्वमेधावभृथेविनियोगः ओं ऋतञ्चसत्यंचाभीद्धात्तपसो ध्याजायत ततो रात्र्यजायत ।

## टीका ।

भिंणमिति रूपस्य दुर्लभत्वाच्च ॥ यद्यप्यन्तर्गतो गर्भो य
स्यासावन्तर्गर्भः स संजातोऽस्येत्यन्तर्गर्भिणमिति वर्हि
णादित्वादिनर्जितमिति कौमुद्यां देवनाथठक्कुरा आहु
स्तदपि न वर्हिणादिगणस्याभावात् फलवर्हाभ्यामिन
जित्यनेन फलवर्हिशब्दाभ्यामेवेनचो विधानात्तस्मादप्
त्ययेन इत्वं मोरमादिशोत्रगभावच्छान्दसइत्येव युज्यतेव
क्तुम् ॥ वस्तुतोऽत्र नानामुपादाने नियमो नास्त्येव अन
न्तर्गर्भिणमिति वाक्यस्य विशिष्टोपादाननिषेधपरत्वादि
ति देवनाथठक्कुराः ॥ अत्राचमनात्प्रागेव पवित्रं धार्यम्
आचम्यप्रयतो नित्यं पवित्रेण द्विजोत्तमः । नोच्छिष्टन्तु भ
वेत्तत्तु भुक्तशेषन्तु वर्जयेदिति वृद्धहारीतवचनात् । अ-
ग्निमजपोपयुक्तकुशत्रयधारणमपि दक्षिणकरे विहितप-
वित्रधारणावसरएव कुर्वन्ति अविरुद्धत्वात् ॥ लघुहा-
रीतः ॥ दर्भहीना तु या संध्या यच्च दानं विनोदकम् ।
असंख्यातञ्च यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥ वायुपुराणे ॥
गोकर्णमात्रा हरिताः कुशाः साग्राः समूलका इति ॥
पवित्रञ्च सुवर्णरजतसहितं धार्यं जपहोमे तथा दाने स्वा-
ध्याये पितृतर्पणे । अशून्यन्तु करं कुर्यात्सुवर्णरजतैः कु-
शैरिति वचनात् तदपि दक्षिणपाण्यनामिकायाम्
अनामिकायां तद्धार्यं दक्षिणस्य करस्य चेति । देवीपुराणे

## टीका ।

हेमधारणविधानाभावाच्च परित रजतकुशानामपितत्रैव धारणौचित्यात् । तर्जन्यांरजतंधार्यमितितुनिर्मूल मितिकल्पतरुप्रभृतय ॥ गौडास्तु तर्जनीरूप्यसंयु-क्तेति विद्याकरधृतवचनात्तर्जन्यामेवरजतंधार्यमित्या-हुः ॥ सप्रणवांगायत्रीमिति ॥ व्यासः ॥ स्मृत्वोङ्कारंच गायत्रीं निबध्नीयाच्छिखांततः । पुनराचम्य हृदयंना-भिंस्कन्धौचसंस्पृशेत् ॥ यदि तदानीं मुक्तशिखस्त-दानेन शिखांबध्नीयान्नतुबद्धामप्युन्मोच्यपुनर्बध्नीया दितिश्रीदत्तादयः । अमन्त्रबद्धांतु शिखोन्मोच्यबध्नी यैवेतिममप्रतिभाति ॥ योगियाज्ञवल्क्यः ॥ ऐशान्य भिमुखोभूत्वाशुचिःप्रयतमानसः । आचान्तः पुनराचा मेद्दतमित्यभिमंत्रितम् ॥ अघमर्षणसूक्तस्येति ॥ योगि याज्ञवल्क्यः ॥ यद्यं नक्तपिशाहृष्टंमद्भिःप्राप्तावयेनवै । मंत्रेण तस्यतत्प्रोक्तमृषेर्भावस्तदार्षकम् ॥ छादना च्छन्दउद्दिष्टं वाससीइवचाकृतेः । आत्मासंछादितोदेवै र्मृत्योर्भीतैस्तुवैपुरा । आदित्यैर्वसुभीरुद्रैस्तेनच्छंदांसि तानिवै ॥ यस्ययस्यतुमंत्रस्यउद्दिष्टायातुदेवता । तदा कारंभवेत्तस्यदेवत्वंदेवतोच्यते ॥ पुराकल्पेसमुत्पन्ना मंत्राःकर्मार्थमेवच । अनेनेदंतुकर्तव्यंविनियोगः स उच्यते ॥ तथा ॥ आर्षंछन्दस्तुदैवत्यं विनियोगस्तथैव

टीका ।

यच । वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥ अवि दित्वा तु यः कुर्याद्याजनाध्यापनं जपम् । हीयते तस्य तत्कर्म भवेदल्पफलं भवेत् ॥ अत ऋष्यादिस्मरणे पाठ क्रम एव ग्राह्यः ॥ तथा ॥ अघमर्षणसूक्तस्य ऋषिरेवा घमर्षणः । आनुष्टुभं भवेच्छन्दो भाववृत्तस्तु दैवतम् ॥ अश्वमेधावभृथके विनियोगस्य कल्पितः ॥ भाववृत्तो ब्रह्मा भावः सृष्टिः तत्र वृत्तः प्रवृत्त इत्यर्थात् ॥ आह्निक तत्त्वाचारचिन्तामण्योरप्येवम् ॥ अश्वमेधावभृथ इति ॥ इदमवबोध्यम् ॥ अनेनेदन्तु कर्तव्यं विनियोगः स उच्यते

मूलम् ।

ततः समुद्रो अर्णवः समुद्रादर्णवादधि संवत्सरो अजायत

टीका ।

इति सामान्येनाभिधायाप्यस्य मन्त्रस्य योगिना अश्वमेधा वभृथे विशिष्य विनियोगात्कर्मान्तरे तथैवादृष्टार्थमभिधा नंनतु तत्तत्कर्मणि तत्तद्रूपेण विनियोग इति ॥ रघुन न्दनोप्येवम् ॥ इदं च ऋष्यादिस्मरणं यत्र स्मृतिकारै रभिहितत्वेन प्रामाणिकं तत्र मंत्रपाठात्प्रागेव कार्य मविदित्वा तु यः कुर्यादित्यवगमाश्रुतेः यत्र च न प्रामाणिकं तत्र न कार्यमत एव योगियाज्ञवल्क्याद्युक्तत्वेन संध्यावन्द नेऽऋष्यादिस्मरणं आजसनेयिभिः क्रियते नतु विवाहा

## टीका ।

दीपवच्छन्दोगैः संध्यावन्दने मार्जनादिमंत्राणामार्षादि
कंनस्मर्यते अनभिधानात्प्राणायामादिमंत्राणांचस्मर्यत
एवप्रामाणिकत्वात् ॥ ऋष्यादिस्मरणे शब्दप्रयोगोन
कार्योमानाभावात्समस्तव्यवायःपक्षस्थ इति वाचस्पति
मिश्राः ॥ शिष्टाचारस्त्वेवं यत्र पुरोहितोमंत्रान्पाठ
यति तत्रसएव ऋष्यादीनिस्मारयति ऋत्विजश्चकर्मकु
र्वन्ति यथापुष्करिणायज्ञादौ यत्रस्वयमेवकर्मकरोति
तत्र ऋष्यादिनामोच्चारणपूर्वकं मंत्रंपठन्ति यथासंध्या
दाविति ॥ युक्तश्चायम् ॥ अन्यानपेक्षयाक्रियमाणे
कर्मणिस्मरणादावपिशब्दप्रयोगस्यावश्यकत्वात् अतएव
श्राद्धे अपवित्रः पवित्रोवेतिमंत्रोच्चारणपूर्वकं पुंडरी
काक्षंस्मृत्वा श्राद्धीयद्रव्यसेकः प्रामाणिकाचारसिद्धः
रुद्रधरोपाध्यायाअपिश्राद्धविवेकेएवमेवाहुः ॥ऋतंचेति॥
अयंमंत्रऋग्वेदे तैत्तिरीयशाखायां यजुर्वेदेचपठ्यते तत्र
तैत्तिरीये रात्रिरजायतेतिपाठः समुद्रोऽर्णवइत्यत्रपूर्व
रूपमकल्पयदिहर्वामितिजपत्वेनसंहितं सोयं मंत्रोमाध्य
न्दिनीयैर्नपठनीयो याज्ञवल्क्योद्गीर्णत्वात् तत्कथाच
महीधरभाष्यादौद्रष्टव्या ॥ मंत्रार्थदीपिकायामप्येवम्
रक्षांकुर्यादिति ॥ छन्दोगपरिशिष्टे । रक्षान्तेवारि

सूत्रम् ।

अहोरात्राणिविदधद्विश्वस्य मिषतोवशी । सूर्याचन्द्र मसौधाता यथापूर्वमकल्पयत् दिवंचपृथिवींचान्तरिक्ष मथोस्वः ॥ इत्यभिमंत्र्य पुनराचामेत् । ततः श्रीं ह्रां रामामभिरक्षन्तु ॥ इतिवारिणात्मानं वेष्टयित्वा रक्षांकुर्यात् । ततः ओंकारस्य ब्रह्मऋषिर्गायत्रीछन्दो ऽग्निर्देवताशुक्लोवर्णः सर्वकर्मारम्भे विनियोगः सप्त व्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुब् बृहतीपं क्तित्रिष्टुब्जगत्यश्छन्दांस्यग्नि वाय्वादित्य बृहस्पतिवरुणे न्द्रविश्वे देवा देवताअनादिष्टप्रायश्चित्तप्राणायामेविनि योगः गायत्र्या विश्वामित्र ऋषिर्गायत्रीछन्दः सविता देवताप्रनयनेप्राणायामेविनियोगः शिरसः प्रजापति

टीका ।

आत्मानं परिक्षिप्यसमन्ततः ॥ अन्तप्राणायामकर्म णोऽन्तेरक्षाकार्येतिकामधेन्वादिसम्मतम् ॥ श्रीदत्तो पाध्यायास्त्वन्त शब्दस्यादावपिशक्तत्वाच्छिष्टाचारानुरो धाच्च प्राणायामादावेवरक्षेत्याहुस्तस्यायमाशयः प्रति भाति अन्तशब्द आद्यर्थकोदृश्यते यथा अग्निष्टोमे तस्यान्त्यऽवारमंलभ्यइत्यत्र । अतएव पर्युक्षणान्तान् व्यतिहरन्नितिगोभिलसूत्रे अन्तशब्द आदिवाचकतया

टीका ।

व्याख्यातो रत्नभाष्यकृद्भिरिति ॥ वस्तुतस्त्वन्तशब्दः प्रसिद्धार्थकएवास्तु अन्ते पूर्वोक्ताचमनकर्मान्ते वारि आसमन्तात् आत्मानंपरिलिप्य वेष्टयित्वा रक्षाकार्यं त्वर्थसंभवात् हरिनाथोपाध्यायादयोप्येवम ॥ यद्यपि रक्षायामष्टभिर्निबन्धृभिरापोमामभिरक्षन्तु इतिवाक्यं न लिखितं तथाप्याह्निकोद्धारे गणेश्वरमहामहोपाध्याये न लिखनादस्माभिरप्याद्रियते ॥ ओङ्कारस्येति ॥ अत्र प्रणवव्याहृति सावित्रीशिरसां मिलितानामेव प्राणायामे विनियोगान्मिलितानामेवऋष्यादिकंस्मृत्वा प्राणायामःकार्यः ॥ योगियाज्ञवल्क्यः ॥ ओङ्कारः

मूलम् ।

ऋषिर्ब्रह्माग्निवायुसूर्यादेवतायजुःप्राणायामेविनियोगः इति ऋष्यादिकं स्मृत्वा बद्धासनः सन्निमीलितनयनो मौनी प्राणायामत्रयंकुर्यात् ॥ तत्र वायोरादानकाले

टीका ।

परमंब्रह्मसर्ववर्णेषुनायकः । प्रजापतेर्मुखोत्पन्नस्तपःसिद्धस्यवैपुरा ॥ तेनोपास्यमतस्तस्यब्रह्मर्षिस्स्वयम्भुवः । गायत्रीतुभवेच्छन्दो अग्निर्दैवतमुच्यते ॥ आदौसर्वत्र युञ्जीत विविधेष्वेवकर्मसु । विनियोगः समुद्दिष्टः श्वेतोवर्णउदाहृतः ॥ अत्र विनियोगाभावेपिश्वेतो

टीका ।

वर्ण इतिकथनंप्रणवस्तुत्यर्थमित्याशुराशयः ॥ विश्वे देवादेवताइति ॥ यद्यप्यत्र विश्वदेवादेवता इत्येव वक्तुमुचितं समासेविभक्तिलुकाविश्वे देवशब्दस्य साधुत्वासम्भवात् अतएव बहुव्रीहौविश्वं संज्ञायामिति सूत्रस्योदाहरणं विश्वेदेवइतिभाष्ये ऽभिहितम् अतएवच विश्वेदेवइतिप्रतीकमुपादाय विश्वे देवइतित्वपपाठइतिशब्देन्दुशेखरे नागोजिभट्टोऽप्यभ्यधात् । संगच्छन्तेचातएव चूडकाश्चवैश्वदेवे इत्यादिमौच प्रयोगाःवैश्वदेवीपुनतीदेव्यागादित्यादिवैदिक प्रयोगाश्च ॥ नच बहुव्रीहौ वस्तुविश्वदेवशब्दोऽन्यत्रतु विश्वे देवशब्दोपिसंज्ञात्वात्साधुरितिवाच्यं बहुव्रीहौकिंविश्वे चतेदेवाश्च विश्वदेवाः संज्ञायांकिंविश्वदेवः इत्युक्तमुभयत्रकौमुदीविरोधात् अतएव विश्वान्देवान्हमावाहयिष्ये विश्वेभ्योदेवेभ्यःस्थानमसि विश्वेषांदेवानांक्रतेतच्छन्दाच प्रतिष्ठार्थमित्यादिप्रयोगाश्चोपपद्यन्तेन्यथाविश्वान्देवान् विश्वदेवेभ्यः विश्वदेवानामितिचस्युः नाप्यसमस्त एवसमूलोक्तप्रयोगः अग्निवायुरादित्येत्यादि छन्दःघटकत्वासम्भवात् तथापिसकल निबन्धेषु तथैवशिष्टाचारानुगृहीतपाठदर्शनादस्माभिर्विश्वे देवादेवताइत्येवलिखितम् ॥ दृश्यतेचक्वचिदार्षप्रयोगेषु विश्वे देवशब्दोऽपि

टीका ।

तथाहि विश्वे देवविशेषानन्मुक्षिविदिच्छन्तिमनमा इति मार्कण्डेयपुराणे रुद्रैर्वसुभिरादित्यैरश्विभ्यां विश्वकृद्भिः । मरुद्भिश्च भृगुभिःसाध्यैर्विश्वे देवैर्महर्षिभिरितिषष्ठस्कन्धे श्रीमद्भागवतेच ॥ यस्तु वाप्रकृतेविश्वे इत्यसमस्तएव देवाइत्यस्यविशेषणम् । नचोक्तरीत्याहन्दुःघटकत्वासम्भवः यथानद्रान्तितिसूत्रे वरेइत्यस्यद्वन्द्वमध्येनिपतनयथावा पुरुषाद्यधिकारममृहतेन कृतेष्वितिवार्तिके तेनेत्यस्यद्वन्द्वमध्ये निवेशनं तथैवप्रकृतेपि प्रामाणिकत्वेन संभवात् यद्वा विश्वे इत्यन्तएवद्वन्द्वः विभाषाजसीतिसूत्रेणाद्वन्द्वेपिसर्वनामसंज्ञाविधानाद्रूपसिद्धेः अस्याऽप्यभिप्राये वादेवताइतिविशेषणः नीलघटोघटइत्यत्रेवविधेयकोटावधिकावगाहिनः शाब्दबोधस्यस्वीकारादित्यलम् ॥ विश्वे देवाइत्यत्र विश्वशब्दस्य संज्ञात्वे पि सर्वनामत्वम् आधुनिकसंज्ञायामेवतन्निषेधात् सर्वादिगणव्याख्याऽमरटीकयोर्भट्टोजिदीक्षिततत्पुत्र भानुदीक्षिताभ्यां चोक्तम् ॥ यदा वं दिशःपूर्वादीनिनामधेयानीत्यसंज्ञायामितिसर्वनामसंज्ञानिषेधात्पूर्वस्यांदिशि वसतीत्यादिनसिध्यतिपौरुषेयसंज्ञाश्रयणादिहच तदभावाद्दोषइति दक्षिणोत्तराभ्यामतसुजितिसूत्रेकैयटश्च । अतएव दिशिमन्दायतेतेजोदक्षिणस्यांरवेरपि । तथा

टीका ।

मेवरघोःपांड्राःप्रतापंनविधिह्विरेद्वृतिरघुवंशप्रयोगःसंय च्छते अन्यथा दक्षिणा शब्दस्यदिक्संज्ञात्वे नासर्वनाम त्वात्स्याड्दुर्लभःस्यात् । सर्वेषांविश्वदेवानां नाम्नेति कृत्वासर्वनाम संज्ञइत्यमरटीकायामच्युतोपाध्याय रायमुकुटौ ॥ यजुरिति ॥ तेनछन्दःसम्भवेन यजुषा स्वयथानछन्दःसम्भवस्तथामविस्तरमुपपादितोऽस्माभिर्वी रेश्वरसंस्कार पद्धतिटीकायाम् ॥ प्राणायाम त्रयमिति ॥ अत्रिः ॥ प्राणायामांश्चरेत्त्रीं स्तुयथाकाल मतन्द्रितः । अहोरात्रकृतंपापंतत्क्षणादेवनश्यति ॥

---

मूलम् ।

तत्र वायोरादानकाले पूरकनामा प्राणायामस्तत्र श्यामंचतुर्भुजं विष्णुंनाभौध्यायेत् । धारणाकालेकुम्भ कस्तत्रकमलासनं रक्तवर्णंचतुर्मुखं ब्रह्माणंहृदयेध्यायेत् । त्यागकालेरेचकस्तत्र ललाटदेशेश्वेतं त्रिनेत्रंशिवं ध्या- येत् । त्रिष्वप्येतेषु प्रत्येकं त्रिर्मन्त्राभ्यासः, प्रत्येकमों- काराद्विमस्व्याहृतयः ओंकाराद्विसावित्री ओंकाराद्य- यमध्यस्य शिरश्चेतिमन्त्रः तस्यस्वरूपम् ।

---

टीका ।

बृहस्पतिः ॥ बद्धासनंनियम्यासूनृस्मृत्वा व्याहृत्या- दिकन्ततः । सन्निमीलितदृङ्मौनी प्राणायामाभ्य-

मभ्यसेत् ॥ आसनं पद्मस्वस्तिकादिकम् ॥ बौधायनः
सव्याहृतिंसप्रणवांगायत्रीं शिरसासह । त्रिः पठेदा-
यतप्राणः प्राणायामः सउच्यते ॥ योगियाज्ञवल्क्यः ॥
पूरककुम्भकरेचकैः प्राणायामस्त्रिलक्षणः । त्रिलक्षणः
त्रिविधः । एवंचप्रत्येकमेवप्राणायामत्वा त्प्रत्येकमेव
त्रिरावृत्तमन्त्रपाठः तेनतन्त्रकृत्वान्मन्त्रपाठः फलितः ॥
तथा ॥ नीलोत्पलदलश्यामं नाभिदेशप्रतिष्ठितम् ।
चतुर्भुजंमहात्मानं पूरकेणैवचिन्तयेत् ॥ कुम्भकेन
हृदिस्थानेध्यायेच्च कमलासनम् । ब्रह्माणंरक्तवर्णञ्च
चतुर्वक्त्रं पितामहम् ॥ रेचकेनेश्वरंध्यायेल्ललाटस्थं
महेश्वरम् । शुद्धस्फटिकसंकाशंनिर्मलंपापनाशनम् ॥
पूरकेणेत्यादौ तृतीयमप्यस्यर्थे आधारकालोपलक्षणा-
र्थत्वात् ॥ प्राणायाममंत्रार्थस्तु ॥ तदितिषष्ठ्यर्थे
तत्सदेवस्यद्योतनात्मकस्य सवितुः प्रेरकस्यान्तर्यामि-
णोविज्ञानानन्दस्वभावस्य हिरण्यगर्भोपाध्यवच्छिन्नस्य-
वाऽऽदित्यान्तरपुरुषस्य वा ब्रह्मणोवरेण्यं वरणीयंसर्वैः
प्रार्थनीयं भर्गः सर्वपापानां भर्जनसमर्थंतेजः सत्यज्ञा-
नानन्दादिवेदान्तप्रतिपाद्यं वयं धीमहि ध्यायामः
छान्दसंसम्प्रसारणम् । यद्वा मण्डलं पुरुषो रश्मयो-
वीर्यमिलितचतुष्टयंभर्गः शब्दवाच्यं तस्यकस्य: सवि-
तानः अस्माकं धियोबुद्धीः प्रचोदयात् प्रकर्षेणप्रेरयति

सत्कर्मानुष्ठानाय ॥ यद्वा वाक्यभेदेनयोजना ॥ सवितुर्देवस्यतत्वरेण्यं भर्गोध्यायामः यश्चनोबुद्धीः ।

भूलम् ।

ओंभूः ओंभुवः ओंस्वः ओंमहः ओंजनः ओंतपः ओंसत्यम् ओंतत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि । धियोयोनः प्रचोदयात्‌ ओं आपोज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरों ३ ॥ ततः सूर्यश्चमेतिब्रह्मऋषिः प्रकृतिश्छन्दः सूर्योदेवताप्रतराचमनेविनियोगः ओं सूर्यश्चमामन्युश्च मन्युपतयश्चमन्युकृतेभ्यः पापेभ्योरक्षन्तां यद्रात्र्यापापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेणशिश्ना रात्रिस्तदवलुम्पतु ।

टीका ।

प्रेरयति तच ध्यायामः सच सवितेव । अथवा लिंगव्यत्ययेनयोजना । सवितुर्देवस्यतद्भर्गो धीमहि योयत् नो बुद्धोः प्रेरयतीति ॥ प्रचोदयादिति प्रचोदयते लिङर्थेलेट इतश्चलोपः परस्मैपदेष्विति तिपइकारलोपः, लेटोऽडाटावित्याडागमः ॥ भर्गःशब्दोऽसुन्नन्तो न्यंक्वादित्विात्गुत्वविधाः एवञ्चसार्वक्लीबमितिमहिधरभाष्यादिस्वरसः भर्गशब्दोऽदन्तः पुंलिंग इति योगियाज्ञवल्क्यानुसारि ब्राह्मणसर्वस्वसंवार्यदीपिकादिस्वरसः । पुनः कथंभूतंभर्गः भुगादिसमस्त-

र्ध्वात्मकसमलोकस्वरूपं तत्त्र्यात्मकं वा प्रणवोब्रह्मपरः अत्र अरत्वनोक्तंब्रह्मेति प्रत्यवायपरिहारायसर्वत्र प्रणवप्रयोगः भवन्त्यस्मिन् भूतानीतिभुः. अधिकरणे क्विप् छान्दसःमुक् । भावयतिस्थापयतिविश्वमितिभुवः अन्तर्भावितण्यन्तात्सुनिगुणाभावश्छान्दसः । सुष्टु स्वयति प्राप्नुवन्त्यात्तदितिस्वः ऋधातोर्बाहुलकः कर्मणि विच । महपूजायाम् असुन् महः पूज्यम् । जन जनने तपआलोचने आभ्यां कर्तर्यसुन् । सत्यंकाल त्रयाबाध्यम् । पुनः किंविशिष्टंभर्गइतिशिरोमन्त्रेण प्रतिपाद्यते जलतेजोरसामृतब्रह्मव्याहृत्यात्मकसत्वरजस्तमोमयब्रह्मविष्णुमहेश्वरात्मकमित्यर्थः ।

---

## मूलम् ।

यत्किञ्चिद्दुरितम्मयि इदमहम्माममृतयोनौ सूर्ये ज्योतिषिजुहोमिस्वाहा इति प्रातराचामेत् । आपः पुनन्त्वितिविष्णुर्ऋषिरनुष्टुप्छन्द आपोदेवता मध्याह्नाचमनेविनियोगः ओं आपः पुनन्तुपृथिवींपृथ्वीपूता-पुनातुमाम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूतापुनातुमाम् । यदुच्छिष्टमभोज्यं यद्वादुश्चरितम्मम सर्वम्पुनन्तुमामापो असताञ्चप्रतिग्रहꣳस्वाहा इतिमध्याह्नआचामेत् । अ-ग्निश्चमेतिरुद्रऋषिः प्रकृतिश्छन्दोऽग्निर्देवता सायमा-

आचमनेविनियोगः ओ३म् अग्निश्चमामन्युश्चमन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो ।

---

टीका ।

एतेन ग्राथर्वीमंत्रे सवितृतेजसोरापातत: प्रतीयमानो ऽपिभेदः परमार्थविचारे नास्त्येवेतिसूचितम् ॥ प्राणायामानन्तरमाचमनमाहयोगियाज्ञवल्क्यः । प्राणायामनंकृत्वा आचामेत्प्रयतोऽपिसन् । आन्तरं स्विद्यतेयस्मात्तस्मादाचमनंस्मृतम् ॥ इतुमन्त्रिगदस्वरसात्सर्वत्रैव प्राणायामानन्तरमाचमनम् ॥ यद्यप्यत्रवाजसनेयिगुरुणायोगिना मंत्रान्वयोनाभिदधे तथापि प्रातः सूर्यश्चमेत्युक्तासायमग्निश्चमेतिच । आपःपुनन्तु मध्याह्ने कुर्यादाचमनन्तत इतिमैत्रायणीयगृह्यपरिशिष्ट वचनं गजाद्यलिखितमप्याचारा नुगृहीतंतत्प्रमाणं तदाहसूर्यश्चमेतीति ॥ ब्रह्मऋषिरिति ॥ ब्रह्मा ऋषिरितिस्थिते ऋत्यकइति ह्रस्वसमुच्चितः प्रकृतिभावः ॥ प्रकृतिश्छन्दइति ॥ मदनपारिजातेप्येवम् ॥ पिंगलसूत्रंच, तान्यभिसंव्याप्रेभ्यःकृतिरिति ॥ व्याख्यातञ्चैतद्धलायुधभाष्ये तानि उत्कृतेरनन्तराणिछन्दांसि अभि सम् वि आङ प्र इत्येतेभ्यः पराणिकृति संज्ञानिभवन्ति तत्रगताक्षरंछन्दः अभिकृतिः, अष्टाक्षरं संकृतिः, द्वानवत्यक्षरं विकृतिः, अष्टाशीत्यक्षर-

माकृतिः, चतुरशीत्यक्षरंप्रकृतिरिति । एवंचचतुर-शीत्यक्षरोऽयंमन्त्रः प्रकृतिछन्दस्कएवभवितुमर्हति, एतेनास्यमंत्रस्यगायत्री ।

मूलम् ।

रात्र्यां यदह्नापापमकार्षं मनसावाचाहस्ताभ्यां पद्भ्यामुदरेणशिश्नाअहस्तदवलुम्पतु यत्किञ्चिद्दुरितमयि इदमहमाममृतयोनौसत्येज्योतिषिजुहोमिस्वाहा इति सायमाचामेत् । ततः आपोहिष्ठेत्यादित्र्यृचस्यसिन्धुद्वीपऋषिर्गायत्रीछन्दआपोदेवतामार्जनेविनियोगः ओं आपोहिष्ठामयोभुवः ओं तानऊर्जेदधातन ओं महेरणाय चक्षसे ओं योवः शिवतमोरसः ओं तस्यभाजयतेहनः ओं उशतीरिवमातरः ओं तस्माअरंगमामवः इति शिरसिकुर्शैः प्रत्येकंजलंक्षिप्त्वा ओं यस्यक्षयायजिन्वथ इत्यधः ओं आपोजनयथाचनः इतिपुनरपिजलंशिरसिक्षिपेत् ततः करेणजलमादायवारत्रयंद्रुपदांपठित्वा तज्जलंशिरसिक्षिपेत् द्रुपदादिवेतिकोकिलोराजपुत्र ऋषिरनुष्टुप्छन्दः ।

टीका ।

पंक्तिविराजश्छन्दांसीत्याचारमयूखादिदाक्षिणात्य-निबन्धेषुलिखितं नादरणीयाः । प्रातराचमनेविनियोग

तिष्ठतीति मन्त्रकृच्छ्रे पदैर्वा: सम्प्रसारणमुत्तरपदादेश्च
कारस्य लोपश्च । भ्रान्तस्य तद्वैदिकप्रक्रियामजानतां
प्रामादिकः पाठः एवं स्नानमार्जने विनियोग इत्यशुद्धः
अघमर्षणस्य नित्यस्नानाङ्गत्वात् ॥ द्रुपदामिति ॥
याज्ञवल्क्यः ॥ अपः पुण्याः समादाय विपठेद्द्रुप-
दाश्रयम् । तत्तोयं मूर्द्ध्नि विन्यस्य सर्वपापैः प्रमुच्यत
इति ॥ ततोऽघमर्षणं छन्दोगपरिशिष्टे ॥ करेणो-
द्धृत्य सलिलं घ्राणमासज्य तत्र च । जपेदनायतासु-
र्वापि: सकृद्वाऽघमर्षणम् ॥ अनायतासुर्वेति विकल्प
बलादायतासुरपि । तत्रायतासुरेव सकृदनायतासु
पुनस्त्रिरिति व्यवस्थितो विकल्प इति श्रीदत्तः । शक्ता-
पेक्षयेत्यन्ये ॥ तत आचमनं तत्र गर्गः ॥ उपस्पृशेत्ततः
पश्चान्मन्त्रेणानेन धर्मतः । अन्तश्चरसि भूतेषु गुहायां
विश्वतोमुखः । त्वं यज्ञस्त्वं वषट्कार आपो ज्योती-
रसोऽमृतम् ॥ एतदाचमनं मार्जनानन्तरं श्रुतमपि
वाक्यान्तरैकवाक्यतयाऽन्तेकार्यम् ॥ अत्र मन्त्रे गायत्री
शिरसी शान्ते ब्रह्मभूर्भुवः स्वरोमिति केचित्पठन्ति
ते भ्रान्ताः तादृशमन्त्रस्य क्वाप्यश्रवणात्, एवं विनियोगे
उपस्पर्शने विनियोग इत्येव समीचीनः पाठो मूलवाक्य
तथैव श्रुतं त्वाचमने विनियोग इति । अर्थस्तु समानः
उपस्पर्शनं त्वाचमनमित्यमरः ॥ उत्थायेति ॥ छन्दो-

मूलम् ।

ततः करस्थं जलं नासिकाग्रे संयोज्यायतासु रनायतामूर्द्धा निःसकृद्वाऽघमर्षणं जपेत् अघमर्षणसूक्तस्याघमर्षणऋषिरनुष्टुप्छन्दो भाववृत्तो देवताऽश्वमेधावभृथे विनियोगः ओं ऋतञ्च सत्यञ्चाभीद्धात्तपसोध्यजायत ततो रात्र्यजायत ततः समुद्रो अर्णवः समुद्रादर्णवादधि संवत्सरो अजायत अहोरात्राणि विदधद्विश्वस्य मिषतो वशी सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः ॥ तत्र जलं भूमौ निःक्षिप्य अन्तश्चरसीति तिरश्चीनऋषिरनुष्टुप्छन्द आपो देवता अपामुपस्पर्शने विनियोगः ओं अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः । त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम् ॥ इत्यनेनाचामेत् ॥ तत उत्थाय प्रणवव्याहृतिसहित गायत्र्या पुष्पमिश्रं जलं सकृत्सूर्यं प्रति क्षिपेत् । ततो भूम्यलग्नगुल्फतल ।

टीका ।

गपरिशिष्टे ॥ उत्थायार्कं प्रतिप्रोहेत्त्रिकेणाञ्जलिमम्भसः ॥ प्रोहेत्क्षिपेत् त्रिकेण प्रणवो भूर्भुवः स्वश्च गायत्री च तृतीयिकेति तत्त्वप्रागुक्तेन । अत्राञ्जलिमित्येकत्वस्य विधेयगतसंख्यात्वं न विवक्षितत्वादञ्जलित्रय-

दानमसंगतम् नविवच्यतेचोद्देश्यगतैवसंख्या यथाय
वसंमार्ष्टीति ॥ एकत्वयुक्तमेकस्यश्रुतिसंयोगादितिसू
त्रेवार्त्तीयेजैमिनिनाप्येकत्वमभिधानितम् ॥ एतच्च-
गौड़दाक्षिणात्यानामञ्जलित्रयदानं मैथिलैर्नाऽऽदरणीय
मादरणीयंवाच्छन्दोगैः । एतज्जलप्रक्षेपफलंसूर्यविद्विषां
मतां त्रिंशत्कोटिपरिमितमन्देहाख्यराक्षसानां नि-
वारणरूपं तैत्तिरीयश्रुतावुक्तम् ॥ अथसूर्योपस्थान-
विधिमुपक्रमतेभूम्यलग्नेति ॥ पुष्पाण्यम्बुमिश्राण्यूर्द्ध्वं-
क्षिपेद् ।

मूलम् ।

भागो भूमिलग्नैकचरणो भूमिलग्नाङ्घ्रिचरणोवा
प्रातः सायं कृताञ्जलिर्मध्याह्ने ऊर्द्ध्वबाहुः सूर्यमुप-
तिष्ठेतैभिर्मन्त्रैः । उद्वयमितिहिरण्यस्तूपऋषिरनुष्टु-
पछन्दः सूर्योदेवतासूर्योपस्थानेविनियोगः ओं उद्वय-
न्तमसस्परिस्वः पश्यन्तउत्तरम् । देवन्देवत्रासूर्यमग-
न्मज्योतिरुत्तमम् ॥ उदुत्यमिति प्रस्कण्वऋषिर्गाय-
त्रीछन्दः सूर्योदेवता सूर्योपस्थानेविनियोगः ओं उदु
त्यंजातवेदसंदेवंवहन्तिकेतवः । दृशेविश्वायसूर्यम् ॥

---

टीका ।

ऊर्द्ध्वबाहुः सूर्यमुदीक्षेतोद्वयमुदुत्यंचित्रंतच्चक्षुरिति-
गायत्र्याचयथाशक्तीति ॥ अत्र मध्याह्ने कात्यायनेन

मोहं बाहुत्वस्याभिधानात्तदसंसक्तपाणिर्वा एकंपादमु-पादपि । कुर्यात्कृताञ्जलिर्वापि ऊर्द्ध्वबाहुरथापिवेति छन्दोगपरिशिष्टोयमुपस्थाने कृताञ्जलित्वं सायंप्रातर्वि-षयमेव । उदीच्ये त सूर्यमुद्दिश्य पश्येत् तेन मेघादि च्छन्नदिनेएवैदृदृशोपस्थानमिति: ॥ गायत्र्यार्चेति ॥ जपःकार्यइतिशेषः तथाचयाज्ञवल्क्यः ॥ स्नानमन्त्रैव तैर्मन्त्रैर्मार्जनं प्राणसंयमः । सूर्यस्यचाप्युपस्थानंसा-वित्र्याः प्रत्यहंजपइति ॥ हिरण्यस्तूपऋषिरिति ॥ सर्वानुक्रमण्यांयद्यप्युद्वयं भीयंनुप् प्रस्कण्वस्येति कात्यायनेनाभिधानात्प्रस्कण्व ऋषिरितिपठितुंयुक्तं तथापिएकातीयकल्पः श्रौतकर्मस्वं वपायाम्नायाच सौ-त्रामण्यवभृथस्य।नजलादुत्क्रमणे कात्यायनसूत्रम् ॥ सोमवदुत्क्रमणमागमनंचोदयमिति ॥ एवञ्चसन्ध्या वन्दनादिस्मार्तकर्मसुऋष्यन्तरानुमतः सकलमैथिला दृतोमूलोक्तएवपाठोयुक्तः एवमन्येष्वप्युपस्थानमंत्रेषुबो-ध्यम् ॥ ननुद्वात्रिंशदक्षरंछन्दोऽनुष्टुप्तथाच पिङ्गल-सूत्रम् ॥ अनुष्टुब्गायत्रैरिति ॥ गायत्रैरष्टाक्षरैः पादैश्चतुर्भ्याच्छन्दोऽनुष्टुबितितदर्थः नचात्रमंत्रतथाक्ष-क्षर ।

मूलम् ।

चित्रमितिकौत्सऋषिस्त्रिष्टुपछन्दः , सूर्योदेवता

सूर्योपस्थानेविनियोगः ओं चित्रंदेवानामुद्गादनीकं चक्षुर्मित्रस्यवरुणस्याग्नेः । आप्राद्यावापृथवी अन्तरिक्ष७ंसूर्य आत्माजगतस्तस्थुषश्च ॥ तच्चक्षुरितिदध्यङ्ङा थर्वणऋषिरचरातीतपुरउष्णिक्छन्दः सूर्योदेवतासूर्योपस्थाने विनियोगः ओं तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतंजीवेमशरदः शत७ंशृणुयामशरदः शतम्प्रब्रवामशरदः शतमदीनाः स्यामशरदः शतंभूयश्चशरदः शतात् ॥ ततः ओं हृदयायनमः ओं भूः शिरसेस्वाहा ओं भुवः शिखायै वषट् ।

टीका ।

इयस्यन्युनत्वादिंतिचेत्सत्यम् इयादिपूरणादिति पिंगलसूत्रानुसारिणमुच्यः पश्येन्तइतिटेवचास् रियमितित्वपाठस्यकल्पमेनछन्दः पूर्त्तेः ॥ सूत्रार्थस्तु ॥ यत्र छन्दसिपादस्याक्षरसंख्या नपूर्यते तत्रेयादिभिरुवादिभिश्चपूरयितव्येति ॥ यथा, तत्सवितुर्वरेणियं, दिवं गच्छसुवः पतइत्यादि ॥ निरङ्कुशामहाकवयस्तु लौकिकहस्तमपीयादिभिः पूरयन्ति तथाच कुमारसंभवे ॥ सदेवदारुद्रुमवेदिकायांशार्दूलचर्मव्यवधानवत्याम् । आसीनमासन्नशरीरपातस्त्रियम्बकं संयमिनंददर्शेति ॥ अत्र त्र्यम्बकमितिवक्तव्ये त्रियम्बकमिति छन्दोऽनुरो-

धादुक्तम् ॥ वृथक्कादिप्रकरणे तन्वादीनांछन्दसिव-हुलमिति वार्त्तिकात् त्रियम्बकमित्यवेयङ् एवमन्यचा-प्युह्यम् ॥ उदुत्यमितीति ॥ सर्वानुक्रमण्याम्, उदुत्यं प्रस्कण्वः सौरीगायत्रीति ॥ व्यासः ॥ उदुत्यंजातवे-देतिऋषिः प्रस्कण्वउच्यते । छन्दोगायत्रमेवास्य सूर्यौदैवतमेवच ॥ अग्निष्टोमउपस्थानेविनियोग स्त-थैवच ॥ अत्र विनियोगद्वयमग्निष्टोमे शालाद्वार्य्ये दाक्षिणमंत्रकेहोमे ।

## मूलम् ।

ओं स्वः कवचायहुं ओं भूर्भुवः स्वर्नेत्राभ्यांवौषट ओं भूर्भुवः स्व रस्त्रायफट इत्यङ्गानि विरावर्त्त्य ओं-कारस्यब्रह्मऋषिर्गायत्रीच्छन्दो ।

## टीका ।

सूर्योपस्थानेच । तेन संध्यावन्दने सूर्योपस्थाने विनियोग इत्येवपाठान्नतुदाक्षिणहोमे विनियोगइति ॥ हैतनिर्णये ताहृशविनियोगस्तुचिन्त्यएव, एवंचित्रमि-त्यत्रापि ॥ प्रस्कण्वशब्दस्तु प्रस्कण्वहरिश्चन्द्रावृषी इतिसूत्रेणसुटोनिपातनात्साधुः ॥ गायत्रीछन्दइति ॥ अष्टाक्षरैः पादैस्त्रिपाद्गायत्रीतिलक्षणात् । अत्रहृ-तीयः पादः सम्पार्य इतिमहीधरभाष्यम् । वस्तुतस्तु-पूर्ववत्सूरियमितिपाठकल्पनेनछन्दः पूर्तिर्बोध्या ॥ त

श्चुरिति ॥ ऋचंवाचमित्यादिपंचाध्यायी आथर्वणः
पुत्रो दधीचाहृष्टा, दध्यङ्ङ्वा आथर्वण एतंशुक्रमे-
तद्ध्यंमध्विंद्रायाब्रुवा इति श्रुतिः तेनास्य मंत्रस्य दध्यङ्ङाथ-
र्वण ऋषिः दध्यञ्चतीति दध्यङ् । तच्चक्षुः पुरउष्णिक्
सौरीति सर्वानुक्रमणी । अत्र पुरउष्णिक् पुर इति
पिंगलोक्तं द्वादशकपादसंपुरउष्णिगिति कात्यायनो-
क्तलक्षणं न संघटते अतएवात्र यातीतत्वं विशिंषन्ति
साम्प्रदायिकाः ॥ अथ गायत्रीजपऽङ्गन्यासविधिमाह
ओं हृदयाय नम इत्यादिना ॥ योगियाज्ञवल्क्यः ॥
प्रणवं भूर्भुवः स्वश्च षडङ्गानि हृदयादयः । त्रिरावर्त्य ततः
पश्चादार्षं छन्दश्च दैवतम् ॥ विनियोगस्तथा रूपं ध्यात-
व्यं क्रमशस्त्वै ॥ प्रणवादीनि हृदयादिषु मूलोक्ता
ङ्गेषु विविन्यस्य ऋष्यादिस्मृत्वा गायत्रीरूपं ध्येयमित्यर्थः ॥
रूपमाह सएव ॥ श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा ।
श्वेतैर्विलेपनैः पुष्पैरलंकारैश्च भूषिता ॥ आदित्यमं-
डलान्तःस्था ब्रह्मलोकगताथवा । अक्षसूत्रधरा देवी
पद्मासनगता शुभा ॥ तथा ॥ आवाह्यनुवाकेन
तेजोऽसीति विधानतः । तत्रावाह्य जपित्वा तु नम

---

मूलम् ।

ऽग्निर्देवतारूपविनियोगः व्याहृतित्रयस्य प्रजापति
र्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छंदांस्यग्निवाय्वादित्या देवता

जपेविनियोगः गायत्र्याविश्वामित्रऋषिर्गायत्रीछंदः सवितादेवता जपेविनियोगः इतिऋष्यादिकंस्मृत्वात्र पंचध्यात्वा तेजोऽसीतिदेवऋषयः शुक्रंदैवतंगायत्रीछंदोगायत्र्यावाहने विनियोगः ओं तेजोऽसिशुक्रमस्यमृतमसिधामनामासि । प्रियन्देवानामनाधृष्टंदेवयजनमसि ॥ इत्यावाह्य परोरजसइति- विमलऋषिरनुष्टुप्छन्दः परमात्मादेवतागायत्र्युपस्थानेविनियोगः ओं गायत्र्यस्ये क ।

टीका ।

स्कृत्यविसर्जयेत् ॥ अत्रावाहनानन्तरं जपात्प्राग्गायत्र्याउपस्थानं गायत्र्यस्येकपदीतिमंत्रेण ॥ तत्र उपतिष्ठेदेतान्देवीन्तुरीयेणपदेन तथाप्युदाहरन्ति गायत्र्यस्येकपदीद्विपदीत्रिपदी चतुष्पद्यपदसिनहिपद्यसे । नमस्तेतुरीयायदर्शतायपदायपरोरजसे इत्ययेनांजपतीतिश्रीयायनसूत्रात्परोरजसइत्यस्यएवमंत्रः गतपथेचसावदोमाप्रापदित्यनुवादइत्याचारादर्शमंत्रार्थदीपिकारघुनन्दनादयः । केचित्तु गायत्र्यस्येकपदाद्यैरुपस्थाय ततोजपेत् । उपस्थायतुरीयेणतेनैवचविसर्जनम् ॥ षष्ठाद्यक्षरमध्यंतत्तु परोरजसेमावदोमिति मंत्रप्रमाणानुसारादमावदोमित्यन्तोमंत्रइत्याहुः अत्रयस्तुतस्याउपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपद-

सिनह्निपद्यसे । नमस्तेतुरीयायदर्शताय पदायपरो रजसेसावदोमाप्रापदिति गततपथब्राह्मणेइतिनाव्यव च्छेदात्प्रापदमाणवमंवदितिवदन्ति ॥ शंकराचार्यभा-स्कराचार्य वाचस्पतिमिश्रादयोऽप्येवम् ॥ युक्तंचैतत् ॥ आद्ये बौधायनसूत्रस्यकल्पतरुकारादिभिरलिखितत्वेन निर्मूलत्वात्तमूलत्वे वा तस्यतैत्तिरीयसूत्रत्वेनमाध्य-न्दिनशाखीयैर्ग्रहीतुमयुक्तत्वात् द्वितीयेपिशतपथविरो धस्य वत्वा तदनुसारिणांतृतीयपक्षस्यैवादरणीयत्वा त्संशयेऽधिकप्रवेशपिहान्य ।

मूलम् ।

पदी द्विपदी त्रिपदी चतुष्पद्यपदसि नहिपद्यसे । नमस्तेतुरीयाय दर्शतायपद यपरो रजसेसावदोमा प्रापत् ॥ इत्युपस्थायप्रातः प्राङ्मुखोमध्याह्ने सूर्या-भिमुख स्तिष्ठन् सायंपश्चिमाभिमुख उपविष्टोजपवि-धिनागायत्रींजपेत् ॥ ओं आगच्छ वरदेदेवि त्र्यक्षरेब्र-ह्मवादिनि । गायत्रिच्छन्दसांमातर्ब्रह्मयोने नमोऽस्तुते सन्निधीभव ॥ ओं भूर्भुवःस्वः तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि । धियोयोनः प्रचोदयात् ओं ॥ ततः प्रणिपत्य ओं उत्तरे शिखरेजाते भूम्यांपर्वतवासिनि । ब्रह्मणास मनुज्ञाते गच्छदेवियथासुखम् इत्यनेनविसर्जयेत् ॥ ततः ओं ।

नमोविवस्वते ब्रह्मन्भास्वते विष्णुतेजसे । जगत्सवित्रे शुचये सवित्रे कर्मदायिने ॥ एषोऽर्घ्यः ओं भगवते श्रीसूर्याय नमः इतिसूर्यायार्घ्यंदद्यात् ॥ मध्याह्न संध्यायां गायत्रीजपानन्तरं विभाड्डित्यनुवाकपुरुषसूक्तशिवसंकल्पमंडलब्राह्मणैः सूर्यमुपस्थायगायत्रीमिमां जपेदितिविशेषः ॥ इतिसंध्याप्रयोगः ।

---

टीका ।

भाष्ये ॥ दशावरमइति विमलकृत्त्विरिति ॥ क्वचिन्निबन्धदृष्टसंध्यादिकंनास्ति ॥ गायत्रींजपेदिति ॥ मनुः ॥ अकारंचाप्युकारंचमकारंचप्रजापतिः । वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीतिच ॥ त्रिभ्यएवतुवेदेभ्यः पादंपादमदूदुहत् । तदित्यृचोऽस्याः सावित्र्याः परमेष्ठीप्रजापतिः एतदक्षरमेतांच जपन्व्याहृतिपूर्विकाम् । संध्ययोर्वेदविद्विप्रोवेदपुण्येन युज्यतइति ॥ तथा ॥ सावित्रीमात्रसारोऽपिवरंविप्रः सुयंत्रितः । नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी ॥ सर्वाशी सर्वभक्षणशीलः ॥ जपदेशविशेषेतरफलंचाह योगियाज्ञवल्क्यः ॥ गृहेऽर्थ्यं जपंकुर्यात्तत्पंगुणं नद्यांतु त्रिगुणंस्मृतम् । गवांगोष्ठे शतगुणमग्न्यागारेशताधिकम् ॥ सिद्धक्षेत्रेषुतीर्थेषु देवतायाश्चसंनिधौ । सहस्रंशतकोटीनामनन्तं विष्णुसन्निधौ ॥ तथा ॥ तिष्ठंश्चेदीक्षमाणोऽर्कजपंकुर्यात्सु-

## टीका ।

अतएवकार्यः यदार्द्रवासाः कुर्वीतजपहोमतपांसिचेति वचनेन जलेजपमात्रनिषेधात् क्वदाचिदपिनोविद्वान् गायत्रीमुदकेजपेत् । गायत्र्यग्निमुखीप्रोक्तातस्मादुत्थाय तांजपेत् ॥ यस्त्वार्द्रशुष्कवस्त्रं वस्त्यलिचैवार्द्रवाससा । जपहोमौतथादानं तत्सर्वंनिष्फलंभवेदित्यादिनागो-भिलेनार्द्रवासनिषेधाच्च गोभिलस्य सामगगुरुत्वेऽपि कात्यायनाविरुद्धत्वा दग्निमुखत्वरूपहेतुनिर्देशाच्च वा-क्यसंनिधावप्युपस्थितौ बाधाभावाच्च । अत्र कात्यायनो-क्तक्रमभंगोऽपि गोभिलयाज्ञवल्क्यैकवाक्यतानुरोधा दकिंचित्कर इति ॥ कात्यायनोक्तक्रमभंगभीता वा-क्यसंनिधिदृष्टास्तु यदिस्यात् क्लिन्नवासावैगायत्रीं मुदके-जपेत् । अन्यथातुशुचौभूम्यां कुशोपरिसमाहित इति पठित्वा जलसन्ध्यावन्दनपक्षेजलेऽपि गायत्रीजपमा-चरन्ति ॥ द्वैतपरिशिष्टस्मृतिकौमुद्यादिष्वप्येवम् ॥ तद्वाक्यावश्यकतया दशकृत्वएवजपेदितिबह्वृचः ॥ ज-पकालेतु न भाषेत यदिभाषेत तदावैष्णवं मन्त्रं जपे-द्विष्णुं वा स्मरेत् । असंस्कृतभाषणंतु सर्वथैवनिषिद्ध म्लेच्छितवै नापभाषितवैइति श्रुतेः ॥ योगियाज्ञ-वल्क्यः । रौद्रपैत्रासुरान्मन्त्रांस्तथाचैवाभिचारिकान् । व्याहृत्यालभ्यचात्मानमपः स्पृष्ट्वाऽन्यदाचरेत् ॥ यथा

टीका ।

श्रौते ता एवाचापि विनियोगानुमुचिताइति ॥ उप-
स्थाने कात्यायनेनानुवाकस्य विशिष्यविनियोगादधि-
कयजपे मानाभावादयंपक्षोनसमीचीन इति ममप्रति
भाति ॥ पुरुषसूक्तंसहस्रशीर्षेत्यादि षोडशर्चः ।
शिवसंकल्पः यज्जाग्रतोदूरमुदैतिदैवमित्याद्याःषडृचयजु
षि माध्यन्दिन्याः । मण्डलब्राह्मणं यदेतन्मंडलन्तपती
त्यादिकयोविंशतिकण्डिका: शतपथब्राह्मणस्थाः ॥ च-
र्चेति ॥ गायत्रीजपानन्तरमित्यर्थः ॥ ब्रह्मयज्ञइति ॥
कात्यायन: ॥ दर्भपाणिः स्वाध्यायञ्चयथाशक्त्यादावा
रभ्यवेदमिति ॥ पवित्रपाणिरादितआरभ्ययथाशक्ति
स्वाध्यायलक्षणं वेदमृग्यजुः समाथर्वरूपंपठेदित्यर्थ ।
अथार्वणो नवेदत्वं किन्तु पवेदत्वमेववेदेषु तन्नाम्नो
ऽपरिगणितत्वात्, तथाचश्रुतिः ऋचःसामानिजज्ञिरे
छन्दांसि जज्ञिरेतस्माद्यजुस्तस्मादजायतेति ॥ कु-
चिदेदत्वव्यवहारस्तुपाठ फलाधिक्यादि नासाम्यमात्रे
णौपचारिकः यथा वेदानध्यापयामास महाभारतप
ञ्चमानित्यत्र महाभारतस्य । अतएव वेदाथर्वपुराणा
नीतिवचनमानवचनेयाज्ञवल्क्योपि वेदेभ्योऽथर्वणंपृथ
गुपन्यास्यत् अतएवचवेदानां चयीतिसंज्ञा विस्तरःसत
उपपद्यते किंच पूर्वमीमांसायां जैमिनिर्णा तेषां

त्येतदेकवाक्यतयामानसपरमेव ॥ तत्कालमाह छ-न्दोगपरिशिष्टे कात्यायनः ॥ योऽयंश्रुतिव्रयः प्रोक्तो ब्रह्मयज्ञः सउच्यते । सचार्वाक्तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः ॥ वैश्वदेवावसानेवा नान्यत्रतनिमित्त-कात् ॥ ऋतेनिमित्तकात् जलतर्पणादिनिमित्तंविना

मूलम् ।

माद्यां ञ्चतुरोमंत्रान् पठेत् ॥ ऋग्वेदादिमंत्रस्य मधुच्छन्द ऋषिर्गायत्रीछन्दोऽग्निर्देवता स्वाध्याये विनियोगः ॥ ओं अग्निमीळेपुरोहितं यज्ञस्यदेवमृ-त्विजम् । होतारंरत्नधातमम् ॥ यजुर्वेदादिमन्त्रस्य परमेष्ठीप्रजापतिऋषिर्यजुः शाखावत्सगावोदेवताः शाखाच्छेदनेमन्त्रमंत्र वत्सापाकरणेशाखयागोरूप-स्प र्शनेचविनियोगः ॥ ओंइषेत्वोर्जेत्वावायवस्थदेवोवःसवि

टीका ।

जलतर्पणेतु तर्पणोत्तरमेव ब्रह्मयज्ञानुष्ठानम् ॥ अथाध्ययनविधिः फलस्वयाज्ञवल्क्यशिक्षायाम् ॥ प्रणवं प्राक्प्रयुञ्जीतव्याहृतिविनयन्ततः । सावित्रींचानुपूर्व्येण ततोवेदान्समारभेत् ॥ हस्तौतुसंयतौ धार्यौ जानुनो रुपरिस्थितौ । गुरोरनुमतिंकुर्यात्पठन्नान्यमतिर्भवेत् ॥ हस्तहीनन्तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजुः सामभिर्दग्धो वियोनिमुपगच्छति ॥ अधीयानस्य

श्रुतेन स्वरवर्णान्प्रयुञ्जतः । ऋग्यजुः सामपूतस्य ब्रह्म लोकोनहीयते ॥ यथावाणी तथापाणी रिक्तान्तु परिवर्जयेत् । यत्रयत्रस्थितावाणी पाणिस्तत्रैवतिष्ठति ॥ तथा ॥ अभ्यासार्थेद्रुतान्वृत्तिं प्रयोगार्थेतुमध्यमाम् । शिष्याणामुपदेशार्थंकुर्याद्वृत्तिं विलम्बिताम् ॥ तथा ॥ संहितानयतेसूर्यंपदानिशशिनः पदम् । क्रमोऽपि नयते सूक्ष्मं यत्तत्पदमनामयम् ॥ अमोघानन्दकारिशिक्षायाम् ॥ पुस्तकेप्रत्ययाऽधीतं नाधीतङ्गुरुसन्निधौ । नभ्राजतेसभामध्ये जारगर्भाइवस्त्रियः ॥ उत्तमो लक्षणज्ञानी लक्ष्यज्ञानीतुमध्यमः । लक्ष्यलक्षणयो-र्ज्ञानीतद्विपात्रंप्रशस्यते ॥ लक्षणेनविनावाणीनिर्मलापिनशोभते । प्रमदा

---

मूलम् ।

ता प्रापयतुश्रेष्ठतमायकर्मणआप्यायध्वमघ्न्याइन्द्राय भागं प्रजावतो रनमीवाअयक्ष्मामावस्तेनईशत माघशᳬसोध्रुवाअस्मिन् गोपतौस्यातबह्वी र्यजमानस्यपशून्पाहि ॥ सामवेदादिमंत्रस्य गौतमऋषिर्गायत्री

टीका ।

रूपसम्पन्नादरिद्रस्येवयोषितः ॥ पाणिनिशिक्षायाम् ॥ गीतीशीघ्रीशिरः कंपीतथालिखितपाठकः । अनर्थज्ञोऽल्पकण्ठश्चषडेतेपाठकाधमाः ॥ माधुर्यमक्षर

व्यक्तिः पदच्छेदस्तुसुस्वरः। धैर्यंलयसमर्थश्चषडेते पाठकागुणाः ॥ तथा ॥ मन्त्रोहीनः स्वरतोवर्णतोवा मिथ्याप्रयुक्तोनतमर्थमाह। सवाग्वज्रोयजमानंहि-नस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ स्वाध्यायपाठे ऋष्यादिज्ञानमावश्यकम्, अविदित्वातुयःकुर्यादित्युक्त वचनात्। अर्थज्ञानमप्यावश्यकमेव ,अथयोऽर्थवित्तस्य वीर्यवत्तरम्भवति जपित्वाहुत्वेष्ट्वातत्फलेनयुज्यत इति कातीयसूत्रात् ॥ अत्रेयंव्यवस्था ॥ समस्तवेदाध्यायिना ऽऽदितोवेदपाठेनस्वाध्यायःकरणीयः,एकदेशाध्यायिना पुरुषसूक्तादि पवित्र पाठेन, सावित्रीमात्रा ध्यायिना पुराणपाठेनेति ॥ आलस्यादसामर्थ्याद्वितदकरणेगौत मापस्तम्बौ ॥ एकामृचमेकं वायजुरेकंवासामाभिव्या हरेत् ॥ एतदनुसृत्यैव प्रथमोपस्थितत्वाच्चतुर्णा वेदा नामाद्यामन्त्रामूलेमयालिखिताः ॥ अनिरुद्धभट्ट गुण विष्णुभट्टहलायुधादयोप्येवम् ॥ यजुर्वेदादिमंत्रस्येति ॥

---

मूलम्।

छन्दोऽग्निर्देवतास्वाध्यायेविनियोगः ओं अग्नआयाहि वीतयेगृणानोहव्यदातयेनिहोतासत्सिबर्हिषि ॥ अथर्व वेदादिमंत्रस्य दध्यङ्ङाथर्वण ऋषिर्गायत्रीच्छन्द आपो देवताःशान्तिकर्मणिविनियोगः ओं शन्नोदेवीरभिष्टय आपोभवन्तुपीतये शंय्योरभिस्रवन्तुनः ॥ इतिपठित्वा

न्यदपि यथाशक्तिवेदवेदाङ्ग पुराणेतिहासस्मृत्यादिक मिच्छातःपठेत् ॥ अथ तर्पणम् ॥ तत्र येन कल्पेन

टीका ।

यस्त्वस्यऋष्यादौगुणविष्णुनाकश्चिद्देदोदर्शितः स सर्वा नुक्रमणीविरुद्धः मूलइवत्राह्मणमर्वर्ख ॥ शाखेति ॥ नन्वचेतनत्वाच्छाखायाः कथन्देवतात्व मितिचेदुच्यते तदभिमानिनीनान्देवतानांसत्वात् अभिमानिव्यपदेशा स्त्वितिव्याससूत्रोक्तेर्मृदब्रवीदापोऽब्रुवन्निति श्रुतेश्च ॥ अथर्ववेदादिमन्त्रस्येति ॥ अयम्पिप्पलाददृष्टोवरुणदैवत इति गुणविष्णुभाष्यम् ॥ शक्त्यावाहश्चन्यदिति ॥ याज्ञ वल्क्यः ॥ वेदाथर्वपुराणानिसेतिहासानिशक्तितः । जपयज्ञप्रसिद्ध्यर्थंविद्यांचाध्यात्मिकींजपेदिति ॥ पञ्च यज्ञाशक्तावपिस्नात्वाब्रह्मयज्ञतर्पणेकर्तव्ये एव, नित्यं स्वाध्यायः पितृभ्यश्चोदकदानय्यँथोत्साहमन्यदिति गौतमवचनात् ॥ अथतर्पणम् ॥ शातातपः ॥ तर्पण न्तुशुचिः कुर्यात्प्रत्यहंस्नातकोद्विजः । देवेभ्यश्चऋषि-भ्यश्चपितृभ्यश्चयथाक्रमम् ॥ प्रत्यहमितिश्रवणान्नित्या धिकारः ॥ विष्णुपुराणे ॥ शुचिवस्त्रधरःस्नातोदेवर्षि पितृतर्पणम् । तेषामेवहितीर्थेनकुर्वीतसुसमाहितः ॥ ऋषितीर्थमङ्गुल्यग्रम्, अङ्गुल्यग्रमार्षं मितिबौधायनो-क्तेः । कनिष्ठामूलं प्राजापत्यं तर्जनीमूलंपित्र्यं करागं

दैवम् ॥ विष्णुः ॥ स्नातश्चार्द्रवासा देवर्षिपितृतर्पणम
म्भस्थएवकुर्यात्परिवर्तितवासास्तीर्थमुत्तीर्य ॥ अम्भः
स्थएवेतिछन्दोगपक्षेवास्थलगौणपक्षे ॥ फलार्थमपि
जलतर्पणमाह कार्ष्णाजिनिः ॥ आपोदेवगणा, सर्वे
आपःपितृगणाःस्मृताः । तस्माज्जलेजलन्देयम्पितृभ्योदत्त
मक्षयम् ॥ तथा ॥ देवतानाम्पितॄणाञ्चजलेदद्याज्जला
ञ्जलीन् । असंस्कृतप्रमीतानां स्थलेदद्याज्जलाञ्जलिम् ॥
एवञ्चजलतर्पणपक्षेप्यसंस्कृतप्रमीतानांस्थलएवजलदा-
नम् ॥ पितृगाथासुयमः ॥ अपिनः सकुलेजायाद्यो
नोदद्याज्जलांजलीन् । नदीषु बहुतोयासु शीतलासु
विशेषतः ॥ शंखलिखितौ ॥ वापीतड़ागोदपानेषु
सप्तपञ्चत्रीन्पिण्डानुद्धृत्यदेवर्षिपितॄंस्तर्पयेत् ॥ अयम्वा-
प्यादौ यथासंख्यंपिण्डोद्धारोऽशक्तादिनास्नानाकरणे
कार्यः स्नानेतुवदङ्गपिण्डोद्धारेणैवप्रसङ्गात्स्वतन्त्रतर्पणा
धिकारसिद्धिरेकप्रयोगत्वात् ॥ यमः ॥ भूमौयद्दापो
दीयन्तेदाताचैवजलेस्थितः । वृथातद्दीयते तोयन्नोप-
तिष्ठतिकस्यचित् ॥ एतेनजलस्थोजलएव तर्पणजलं
क्षिपेदित्युक्तम् ॥ स्थलस्थस्तुस्थलएवतर्पणजलंक्षिपेदि-
त्याहशंखः ॥ नोदकेषुनपात्रेषुनक्रुद्धोनैकपाणिना ।

---

टीका ।

नोपतिष्ठतितत्तोयंयन्नभूमौप्रदीयते ॥ अथभूमिपदं

शुष्कपर्णमृद्दारुदावपिजलमेवइतिकेचित्तन्न लक्षणा बीजस्यानुपपत्तेरभावात् ॥ शंखलिखितौ ॥ नेष्टकाचितेपितॄंस्तर्पयेत् ॥ उशना ॥ नवेष्टितशिरानुक्षणाकाषायवासादैवपितृकार्यंकुर्य्यात् ॥ सुमन्तुः ॥ अथा काशेक्षिपेद्वारिजलस्थोदक्षिणामुखः ॥ आकाशेजलो पर्य्येव ॥ यमः ॥ द्वौस्त्रीञ्जलाञ्जलीन्दद्यादूर्ध्व मुच तरन्ततः गोशृङ्गमात्रमुत्सृज्यजलमध्येजलंक्षिपेत् ॥ अयमर्थः ॥ पित्रादिषट्काञ्जलिविषयेउत्तरोत्तरंवृद्धिः कर्त्तव्यातृतीयोऽञ्जलिर्गोशृङ्गप्रमाणइति ॥ गोशृङ्गन्तु द्वादशाङ्गुलमितिशिष्टाः ॥ जलमध्यइतिपक्षप्राप्तानुवादोनतुविशेषविधिः ॥ यदाकृतोदकमादायतर्पणङ्कुर्य्यात्तदाजलपात्रेतिलाः प्रक्षेप्याः यदातुजलाशयस्य जलमादायतदासव्येनपाणिनावस्त्रादिधृतांस्तिलान्दक्षिणपाण्यञ्जलौदत्वातर्पयेत् तिलास्तुनावश्यकाः किन्तुमन्त्रादर्भाश्चावश्यकास्तदाहमरीचिः ॥ तिला नामप्यभावेतुसुवर्णरजतान्वितं । तदभावेनिषिञ्चेतु मन्त्रैर्दर्भैश्चवापुनः ॥ एतच्चतर्पणमात्रस्यसमन्त्रकत्वाभिधानात् पद्मपुराणादिकल्पेनापितर्पणंकार्य्यमस्मान् केचिदनुगमयन्ति अतएवपराङ्मुखत्वाभावान्नदर्वीहोमाधिकरणविरोधोपि ॥ बहुवस्तुकातीयकल्पमंत्रा नियतात्तद्विषयकमेवोक्तवचनं तेनपद्मपुराणीयादिक-

र्पणमन्त्रान्वयोऽनङ्गव्यवायापत्तेरितिवदन्ति ॥ पद्मपुराणे ॥ ब्रह्माणन्तर्पयेत्पूर्वंविष्णुंरुद्रंप्रजापतिम् । देवायक्षास्तथानागागन्धर्वाप्सरसोऽसुराः ॥ क्रूराःसर्पाः सुपर्णाश्चतरवोजम्भकाःखगाः । विद्याधराजलाधारास्तथैवाकाशगामिनः । निराधाराश्चयेजीवाः पापेधर्म्मे रताश्चये ॥ तेषामाप्यायनायैतद्दीयतेसलिलम्मया ॥ कृतोपवीतीदेवेभ्य इति ॥ पावाद्यपूर्वकम्मन्त्रैरात्तीर्थे

मूलम् ।

स्नानं तेनैवतर्पणमितिनियमात्पद्मपुराणीयस्नानकाल्पवतां वाजसनेयिनाम्पद्मपुराणीयएवतर्पणविधिः ॥ यज्ञोपवीतीप्राङ्मुखः सयवकुशयोर्दैवतीर्थेन प्रागग्रकुशोपरितर्पयेत् ॥ ॐ तर्पणीयादेवाआगच्छन्तु ॥ ॐ ब्रह्मातृप्यतां ॐ विष्णुस्तृप्यताम् ॐ रुद्रस्तृप्यताम् ॐ प्रजापतिस्तृप्यताम् ॐ देवायक्षास्तथानागागन्धर्वाप्सरसोऽसुराः ॥ क्रूराःसर्पाः सुपर्णाश्चतरवोजम्भकाःखगाः ॥ विद्याधराजलाधारास्तथैवाकाशगामिनः ॥ निराधाराश्चयेजीवाः पापेधर्म्मे रताश्चये ॥ तेषामाप्यायनायैतद्दीयतेसलिलम्मया ॥ ततउत्तराभिमुखः कण्ठलम्बितयज्ञोपवीतः कायतीर्थेन ॐ सनकाद्यआगच्छन्तु ॥ ॐ सनकश्चसनन्दश्चतृतीयश्चसनातनः ॥ कपिलश्चासुरिश्चैव वोढुःपञ्चशिखस्त-

टीका ।

चकुशाक्ष चौम् ॥ प्रागग्रेषुसुरांस्तत्र्पयेदित्यादौ पुर्व-
पितृनितियोगियाज्ञवल्क्यावचनादावाहनतर्पणकार्यं नाम-
वाहनंकेनमन्त्रेणेत्याकाङ्क्षायामस्मिन्कल्पे मन्त्राप्र-
वणात्तदर्थप्रकाशकत्वेन तर्पणीयादेवा आगच्छन्त्विति
वाक्यं नैवकार्यमितिशिष्टाचारः एवंभूमिष्ठानाम्वाजस
नेयिनां कुशोपर्य्येव तर्पणमुक्तवचनात् । ब्रह्मादीनाञ्च
तुणांतर्पणप्रयोगा कात्यायनं योगियाज्ञवल्क्योक्त एव
प्रयोगो ग्राह्यस्तथाचमः ॥ अन्वारब्धेन सव्येन पा-
णिनादक्षिणेनतु । तृप्यतामिति सेक्तव्यं नाम्नातु प्रण
वादिनेति ॥ अन्वारब्धेन वाम पाणिना पश्चाल्लग्नेन
एवञ्च तद्वला देवतर्पणाञ्जलौ तीयुतावञ्जलिः पुमानि

मूलम् ।

था । सर्वतैतृप्तिमायान्तुमद्दत्तेनाम्बुनासदा ॥ ततः
पूर्वाभिमुखः सव्येन ॥ ओं मरीच्यादयआगच्छन्तु ॥

टीका ।

तिकोणोऽपिसङ्कोचनीयः तथाच ओं ब्रह्मातृप्यतामि
त्यादिक्रमेण वाक्यंकर्तव्यम् देवादीनान्तु देवायक्षा-
त्यादिना दीयतेसलिलमयेत्यन्तेन मन्त्रेणैकएवाञ्ज-
लिः ॥ यत्तुपूर्वोक्तरीत्या देवास्तृप्यन्तामित्यादिवाक्यैरेव
तर्पणं तेषामप्यायनार्थैतद्दीयते सलिलमयेतितुध्यान

मातृमिति हरिहरस्याह तन्नश्रुतवाक्यत्यागे इत्यभावा द्यत्रब्राह्मणमित्यादौ वाक्यंनश्रुतं तत्रैव योगियाज्ञ वल्क्याद्युक्तक्रमस्य ग्राह्यत्वात्पार्थ्यमं रतास्वये इत्यत्र यंइत्यस्यानन्वयापत्तेश्चेति ॥ तथा ॥ निवीतीतुभवे भूत्वा ॥ मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा । सनकश्चसनन्दश्च तृतीयश्चसनातनः ॥ कपिलश्चासु रिश्चैव वोढुः पंचशिखस्तथा । सर्वेतेतृप्तिमायान्तु मद्दत्तेनाम्बुनासदा ॥ अत्राप्युक्तयुक्तेः सनकश्चेत्या दिनासदेत्यन्तेनवाक्येनैकएवाञ्जलिः । सनकस्तृप्यता मित्यादिक्रमेणवाक्यन्तु कात्तीयादितर्पणएव ॥ नच एकैकमञ्जलिंदद्यादेवैतु सनकादयः । अर्हन्तिपितर स्त्रीं स्त्रीन् स्त्रियस्त्वेकैकमञ्जलिमितिगोभिलवचनाद्दा वञ्जलीस्यातामितिवाच्यं तद्वचनस्यकल्पतरुकामधेनु रत्नाकराद्यलिखितत्वेन निर्मूलत्वात्समूलत्वेपि गो- भिलोदनंगापरत्वस्यैवयुक्तत्वात् अतएवाह्निकाचारे महामहत्तकगणेश्वरमहामहोपाध्यायाअप्येकमञ्जलिं दद्यादितिलिखितवन्तः ॥ रघुनन्दभट्टाचार्यस्तूक्तवचना त्सनकश्चेतिमंत्रस्यैवद्विःपाठइत्याह तन्मतेद्वावितिवीप्साविरोधःस्पष्टएवेतिबोध्यम् ॥ ऋषींस्तथेतिपूर्व- मुक्तांस्तानेवनामादिशमाह पद्मपुराणे ॥ मरीचिमत्र्यां गिरसौपुलस्त्यंपुलहंक्रतुम् । प्रचेतसंवसिष्ठंच भृगुं

नारदमेवच ॥ देवान्सर्वानृषींश्चवास्तर्पयेद्यवतोदकैः ॥

मूलम् ।

ओं मरीचिस्तृप्यताम्, ओं अत्रिस्तृप्यताम्, ओं अंगिरास्तृप्यताम्, ओं पुलस्त्यस्तृप्यताम्, ओं पुलहस्तृप्यताम्, ओं क्रतुस्तृप्यताम्, ओं प्रचेतास्तृप्यताम्, ओं वसिष्ठस्तृप्यताम्, ओं भृगुस्तृप्यताम्, ओं नारदस्तृप्यताम् ॥ ततोदक्षिणाभिमुखो ऽपसव्येनमोटकतिलजलान्यादायतर्पयेत् ॥ ओं अग्निष्वात्तादयश्चाग-

टीका ।

मरीच्यादीनान्देवधर्मत्वात्प्राङ्मुखः सव्येनदेवतीर्थममदेशार्षतीर्थेन सयवऋजुकुशतयोदकैः ओं मरीचिस्तृप्यतामित्यादिक्रमेण सकृत्सकृत्तांस्तर्पयेत् । निवीतीतु भवेत्तद्वदुपक्रमादत्रापि 'निवीतित्वमेवेतिभ्रमो ऽयः तस्यमनुष्यधर्मत्वं न सनकादिमात्रपरत्वात् ॥ यवतोदकैरिति ॥ यवाक्षतपदं यवपरं यवाक्षिस्तर्पयेद्देवानितिपरिशिष्टदर्शनादेवञ्च ब्रह्माणमारभ्यनारदपर्यन्तं यवोदकैस्तर्पयेत् यवविधानन्त्वतफलाधिक्यार्थं नत्वावश्यकम् ॥ तथा ॥ अपसव्यंततः कृत्वासव्यं जानुचभूतले । अग्निष्वात्तांस्तथासौम्यान्हविष्मन्तस्तथोष्मपान् ॥ सुकालिनोवर्हिषदस्तथाचैवाज्यपान्पुनः । तर्पयेत्तुपितृन् भक्त्यासतिलोदकचन्दनैः ॥

दर्भपाणिस्तुविधिनाहस्ताभ्यांतर्पयेत्ततः ॥ अपसव्य मितिसकलपितृधर्मोपलक्षणमतएवाञ्जलित्रयदानम-पीतिकेचित् ॥ बहवस्तुबौद्धव्यत्वाहंनलंसोमंयर्ममर्यमणां

मूलम्।

तृप्यन्तु ॥ ओँ अग्निष्वात्तास्तृप्यन्तामिदंसतिलंजलं तेभ्यः स्वधानमः। ओँ सौम्यास्तृप्यन्तामिदंसतिलं जलंतेभ्यः स्वधानमः। ओँ हविष्मन्तस्तृप्यन्तामिदं सतिलंजलंतेभ्यः स्वधानमः। ओँ ऊष्मपास्तृप्यन्तामिदं सतिलंजलंतेभ्यः स्वधानमः। ओँ सुकालिनस्तृप्यन्ता मिदंसतिलंजलंतेभ्यः स्वधानमः। ओँ बर्हिषदस्तृप्यन्ता मिदंसतिलंजलंतेभ्यः स्वधानमः। ओँ आज्यपास्तृप्य-न्तामिदंसतिलंजलंतेभ्यः स्वधानमः। ओँ यमादय

टीका।

नथा। अग्निष्वात्तासोमपाश्चबर्हिषदः सकृत्सकृदिति छन्दोगपरिशिष्टदर्शनादेकैकाञ्जलिरितिवदन्ति ॥ भू यसामाचारोप्येवम् ॥ अग्निष्वात्तादिदिव्यपितृतर्पणे नमस्कारस्वधान्वितंवाक्य नमस्कारस्वधान्वितमिति योगियाज्ञवल्क्यवचनात्तेन अग्निष्वात्तास्तृप्यन्तामिदं सतिलंजलंतेभ्यः स्वधानमइतिवाक्यम्॥ अत्रावसरे यद्यपियमतर्पणं पद्मपुराणेनाभिहितं तथापि यमाद्यैके इतिदिव्यपितृतर्पणानन्तरं कात्यायनेनाभिधानात्तद्वि-

रोधित्वं मातापितृतत्प्रयुंजतीशिष्टाः ॥ कात्यायनः ॥
यमायधर्मराजायमृत्यवेचान्तकायच । वैवस्वतायका
लाय सर्वभूतक्षयायच ॥ औदुम्बरायदध्नाय नीलाय
परमेष्ठिने । वृकोदरायचित्राय चित्रगुप्तायवैनमः ॥
एकैकस्यतिलैर्मिश्रांस्त्रींस्त्रीन्दद्याज्जलाञ्जलीन् । या-

मूलम् ।

आगच्छन्तु । ओं यमायनमः, ओं धर्मराजायनमः,
ओं मृत्यवेनमः, ओं अन्तकायनमः, ओं वैवस्वताय
नमः, ओं कालायनमः, ओं सर्वभूतक्षयायनमः, ओं
औदुम्बरायनमः, ओं दध्नायनमः, ओं नीलायनमः,
ओं परमेष्ठिनेनमः, ओं वृकोदरायनमः, ओं चित्राय
नमः, ओं चित्रगुप्तायनमः, ओं चतुर्दशैतेयमाः स्वस्ति
कुर्वन्तुतर्पिताः । ओं आगच्छन्तुमेपितरइमंगृह्णन्त्वपो
ञ्जलिम् ॥ ओं अद्यामुकगोत्रः पिताऽमुकशर्मातृप्यता

टीका ।

वज्जीवकृतंपापंतत्क्षणादेवनश्यति ॥ अत्र नमइति
प्रत्येकंसम्बध्यते तेन यमायनम इत्यादिवाक्यम् ॥
यद्यप्यत्राञ्जलित्रयमेवस्मर्यते तथाप्याचारादेकएवाञ्ज-
लिः ॥ अयमत्रतर्कः ॥ यमादीनांदेवत्वपितृत्वोभय
धर्मवत्त्वात्तदुभयविधिनातर्पणंकार्यमेवञ्चैकांजलिनमः
शब्दप्रयोगादर्थः कतिपयेदेवत्रिधयाभवन्त्यपमव्यदक्षि-

त्ताभिमुखत्वाद्यवस्कानिपर्यैपित्तृविधय इति। अतएव गणेश्वरमहामहोपाध्यायेन चतुर्दशयमानेकैकाञ्जलि नापित्तृधर्म्मेणतर्पयेदिति लिखदलिखितम्॥ एतत्तर्प-णात्तरं चतुर्दशैतेयमाः स्वस्तिकुर्वन्तुतर्पिताइति गोभि लीयतर्पणोक्तं वाक्यम्बहवः प्रचिपन्ति॥ पितृतर्पणे पद्मपुराणम्॥ पिताद्वीन्नामगोत्रेण तथा मातामहा नपि। सन्तर्पयेद्भक्त्याविधिवद्दिमं मन्त्रमुदीरयेत्॥ ये-ऽबान्धवाबान्धवावायेन्यजन्मनिबान्धवाः। तेतृप्तिम-खिलायान्तु यश्चास्मत्तोभिवांछति॥ आवाह्नतर्पणे दिलुक्तंपूर्वत्वादवकेनावाहयेदित्याकांचायां काष्णा-जिनिः॥ आगच्छन्तुमेपितर इमंगृह्णन्त्वपोञ्जलि मिति॥ अत्रापइतिषष्ठ्या एकवचनमार्षत्वात् अथवा

मूलम्।

मिदंजलंसतिलं तस्मैस्वधा ३ ओं अद्यामुकगोत्रः पितामहोऽमुकशर्मा तृप्यतामिदंजलंसतिलं तस्मैस्व-धा ३ ओं अद्यामुकगोत्रः प्रपितामहो ऽमुकशर्मा तृप्यतामिदंजलंसतिलं तस्मैस्वधा ३ ओं तृप्यध्वम् ३ ओं अद्यामुकगोत्रोमातामहो ऽमुकशर्मा तृप्यतामिदं जलंसतिलं तस्मैस्वधा ३ ओं अद्यामुकगोत्रः प्रमाता महो ऽमुकशर्मातृप्यतादिदंजलंसतिलं तस्मैस्वधा ३ ओं अद्यामुकगोत्रा वृद्धप्रमातामहो ऽमुकशर्मा तृप्य-

टीका ।

अप: शब्द: सान्त: अपोभिर्मार्जनं कृत्वेत्यत्रयथा, तेना ञ्जलिशब्दस्यसमास: ॥ 'आप: कर्माख्यायामित्योणा दिकेऽसुनिकृत्ते च अप: शब्द: साधु: ॥ तर्पणेसौवर्ण राजत ताम्रखड्गपात्राणि प्रशस्तानि ॥ वाक्याकां-क्षायां, तृप्यन्तामितिसैकल्प्य गाम्नातुप्रणवादिनेति योगियाज्ञवल्क्योक्तमुपतिष्ठते । नामतस्तुस्वधाकारै स्तर्प्पा: स्युरनुपूर्वशइतिवचनात्स्वधायोगस्तत्र च ओं अद्यामुकगोत्र: पितामुकशर्म्मातृप्यतामिदंजलंसतिलं तस्मैस्वधा इत्यादिवाक्यंसिध्यति तत्तु प्रत्यञ्जल्याव-र्त्तनीयमितिवहव:, सकृदेवेतिकेचित् ॥ अत्र प्रथमा न्तमेवनामोच्चार्यम्, शर्म्मन्नर्यादिकेकार्ये शर्म्मातर्पणक-र्म्मणि । शर्म्मणोऽव्ययकालेस्यादेवं कर्त्तानमुह्यतीति गोभिलवचनात् । वाक्येऽस्मात्पितृत्वंप्रयोज्यमतएव आयन्तुन: पितरइतिमंत्र: संगच्छतइतिकल्पतरु वाच-स्पतिमिश्रादय: ॥ वस्तुतस्तु सम्बन्धिशब्दादेवतदर्थ लाभान्नतथाप्रयोग: । पारिजातश्रीदत्ताह्निकादिषुपि-

मूलम् ।

तामिदंजलं सतिलं तस्मैस्वधा ३ ओं तृप्यध्वम् ३ ओं अद्यामुकगोत्रामातामुकदेवी तृप्यतामिदंजलं सतिलं तस्मैस्वधा १ ओ अद्यामुकगोत्रा पितामह्यमुकदे-

वी तृप्यतामिदंजलंसतिलं तस्यैस्वधा१ ओं अद्यामुक-
गोत्रा प्रपितामह्यमुकदेवी तृप्यतामिदंजलंसतिलं
तस्यै स्वधा १ ओं अद्यामुकगोत्रा मातामह्यमुकदेवी
तृप्यतामिदंजलं सतिलं तस्यै स्वधा १ ओं अद्यामुक
गोत्रा प्रमातामह्यमुकदेवी तृप्यतामिदंजलं सतिलं
तस्यै स्वधा १ ओं अद्यामुकगोत्रा वृद्धप्रमातामह्यमुक-
देवी तृप्यतामिदंजलं सतिलं तस्यै स्वधा ततः षड्भी

टीका।

वम्। आचारोऽपितथैवएवंच एतपितरः सोम्यासइति
मन्त्रोऽपिव्याख्यातः किंच आगच्छन्तुमेपितर इतिमंत्रेण
स्वपितृणामेवावाहनात्कोऽपिग्रहे वर्णितस्तथास्मच्छब्दप्र-
योगः एवंयेभ्योवापि पितादद्यात्तेभ्योवापिप्रदापयेत्।
एवंग्राह्यवक्ष्यमाणांश्चप्रमीतपितृकोद्विजः॥ वसून्रुद्रां
स्तथादित्यान्नमस्कारस्वधान्वितान्। एतेसर्वस्यपितर
एष्वायत्ताश्चमानुषाः। आचार्याग्न्याग्निपितृंश्चैव पितृ-
प्रभृतिनामत इतियोगियाज्ञवल्क्यवचना त्स्वपितृणा
मपिस्वधानमइत्यन्तं त्यागवाक्यमितिकल्पतरुरत्नाक-
रादयः। स्वपितृणांदिव्यत्वाभावेन नमोयोगेमानाभा-
वात्स्वधेत्यन्तमेवत्यागवाक्यमुक्तवचनन्तु दिव्यपितृपर-
मितिश्रीदत्तः। आचारोऽप्येवम्॥ प्रपितामहपर्यन्तं
तर्पयित्वाकात्यायनतर्पणोक्तंदपार्श्वमिति विरवापिमिश्राः

पठन्ति वृद्धप्रमातामहतर्पणोत्तरं तत्पाठिमूलं मृग्यम् ॥ तर्पणन्तु योयोजीवतितंतंपरित्यज्य परं परं पुरुषमन्त

मूलम्।

पितृव्यभ्रातृमातुलादीनपि यथाकामन्तर्पयेत् ततः ॐ येऽबान्धवा बान्धवावा येऽन्यजन्मनि बान्धवाः। तेतृप्तिमखिलायान्तु ययास्मत्तोऽभिवाञ्छति ॥ इत्य वसानाञ्जलिन्दत्वा ॐ ये चास्माकंकुलेजाता अपुत्रा गोत्रिणोमृताः। तेपिबन्तुमयादत्तं वस्त्रनिष्पीडनो-दकम् ॥ इतिमन्त्रेण जलादुत्तीर्यास्तृतकुशत्रयायां भूमौदक्षिणाभिमुखः स्नानवस्त्रं निष्पीड़येत् ॥ ततः

टीका।

र्पयेत्कार्यम्। एवंषट्पुरुषतर्पणं विधायदेव्यन्तनामान्यु च्चार्यतर्पणंस्त्रियस्तर्पणीः तोन्पितृतस्त्रीन्मातृतः पत्न्यश्चेति गोभिलवचनात् पितृतः पितृपक्षे मातृतः मातृपक्षे। स्त्रीतर्पणेतु नावृत्तिर्मानाभावात् ॥ षट्पुरुषतर्पणञ्च मोटकमपक्रम्यमोटकान्तरेण मातादितर्पणम्, पिण्डार्थं येस्तृताद्भार्यैः कृतंपितृतर्पणम्। मृतोच्छिष्टे घृतायेष तेषांत्यागोविधीयत इतिलघुहारीतवचनादि-तिमिश्राः ॥ तदनन्तरंपत्न्यादीनां काम्यतर्पणेषु स्त्रो णामेकैकोऽञ्जलिः पुंसांत्रयस्त्रयइतिकेचित् ॥ वस्तुत-स्त्वावृत्तौमानाभावात्सर्वेषामेकएवाञ्जलिः, प्रामाणिक

निवर्त्त्य प्रक्षयेत् ॥ मित्रादयस्तु सवर्णा एव तर्पणीयाः सवर्णेभ्यो जलन्देयं नासवर्णेभ्य एव चेति योगियाज्ञवल्क्य वचनात् ॥ माघशुक्लाष्टम्यां भीष्मतर्पणबोधक, भीष्मायतु जलन्दद्यु, स्त्रयो वर्णा द्विजातय इति विशेषवचनं यदि समूलं तदा तैवर्णिकैनैव तत्तर्पणं कार्यं, नो चेन्नवर्णेनापि ॥ असवर्णस्यापि पितुः कार्यमेव तर्पणम् ॥ अत्र पित्रादितर्पणोत्तर माब्रह्मस्तम्बपर्यन्तन्देवर्षिपितृमानवाः । तृप्यन्तुपितरः सर्वेमातृमातामहादयः ॥ अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् । आब्रह्मभुवनाल्लोकानिदमस्तुकुशोदकमिति श्लोकद्वयं काश्चित्केचित्पठन्ति तद्युक्तं पद्मपुराणे तन्मन्त्रादर्शनेनानङ्गव्यवायापत्तेर्निर्मूलत्वाच्च अतएव शिष्टानप ठन्ति ॥ ततो

मूलम् ।

ओं नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे । जगत्सवित्रे शुचये सवित्रे कर्मदायिने एषोऽर्घः ओं सूर्याय नमः इति -सूर्यायार्घन्दत्वा तं नमस्कुर्य्यात् ॥ अथ कातीय तर्पणविधिः ॥ पूर्वाभिमुखः ओं विश्वे देवास आगत शृणुता म इमं हवम् । एदं बर्हिर्निषीदत ॥ ओं विश्वे देवाः शृणुतेमं हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ । ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ॥ इत्यावाह्य सयवजलेन वामान्वारब्धदक्षिणकरेण

दर्भैर्दर्भेषुपूर्वाग्रेषु देवानृषींश्चतर्पयेत्, ओं ब्रह्मातृप्य-
ताम्, ओं विष्णुस्तृप्यताम्, ओं रुद्रस्तृप्यताम्, ओं
प्रजापतिस्तृप्यताम्, ओं देवास्तृप्यन्ताम्, एवं छन्दांसि
वेदाः ऋषयः पुराणाचार्याः गन्धर्वाः इतराचार्याः
सर्व्वत्सरः सावयवः देव्यः अप्सरसः देवानुगाः नागा-
नुगाः सागराः पर्वताः सरितः मनुष्याः यक्षाः रक्षांसि
पिशाचाः सुपर्णाः भूतानि पशवः वनस्पतयः ओषधयः
भूतग्रामश्चतुर्विधः मरीचिः अत्रिः अङ्गिराः पुलस्त्यः
पुलहः क्रतुः प्रचेताः वसिष्ठः भृगुः नारदः एतानिप्रण
वादिनै कवचनाद्यन्तेनलोडन्ततृप्यत्वन्तवाक्य नतर्पणी-
यानि, ततोनिवीतीप्रजापति तीर्थेनोदङ्मुखः केवल-

टीका ।

येऽबान्धवाइतिमन्त्रं शाकोऽवसानाञ्जलिर्देयः ततोयेचा
स्माकमितिगोभिलोक्तमंत्रेण पितृदासादीनुद्दिश्यवस्त्रं
पीडयेत्, यन्नाम्नातंस्वशाखायांपारक्यमविरोधियत् ।
विद्वद्भिस्तदनुष्ठेय मग्निहोत्रादिकर्मवदिति वचनात् ॥
ततस्तर्पणोत्तरकर्म ॥ विष्णुपुराणे ॥ आचम्यप्रयतो
दद्यात्सूर्यायसलिलाञ्जलिम् । नमोविवस्वतेब्रह्मन्
भास्वतेविष्णुतेजसे । जगत्सवित्रे शुचयेसवित्रेकर्मदा-
यिनेइति ॥ कातीयतर्पणविधिरिति ॥ कात्यायनः ॥
ततस्तर्पयेद्ब्रह्माणं पूर्वं विष्णुंरुद्रं प्रजापतिन्देवांश्छन्दा

मूलम् ।

बलेन ओं सनकस्तृप्यताम् ओं सनन्दस्तृप्यताम्, ओं सनातनस्तृप्यताम्, ओं कपिलस्तृप्यताम्, ओं आसुरिस्तृप्यताम्, ओंवोढ़ुस्तृप्यताम् ओंपञ्चशिखस्तृप्यताम्, ततोऽपसव्येन पातितदक्षिणजानुर्दक्षिणाभिमुखोदक्षिणाग्रकुशेषुप्रत्येकं सतिलजलाञ्जलित्रयेण पितृतीर्थेन तर्पयेत् ओंकव्यवालस्तृप्यतामिदंसतिलजलंतस्मैस्वधा नमः एवंनलंसोमं यममर्यमणमग्निष्वात्तान् सोम्यान् हविष्मतऊष्मपान् सुकालिनोवर्हिषदआज्यपान्दिव्य पितॄंस्तर्पयेत्पृथगेकवचनाद्यूहेन ॥ ततः ओं यमाय नमइत्यादिक्रमेण चतुर्दशयमांश्चतर्पयेत् । ततः ओं उशन्तस्त्वानिधीमह्युशन्तः समिधीमहि । उशन्नुशत आवहपितॄन् हविषेअत्तवे ॥ ओं आयन्तुनः पितरः

---

टीका ।

ऋषि वेदान्वीन् पुराणाचार्यान् गंधर्वानितराचार्यान् संवत्सरञ्चसावयवन्देवीरप्सरसोदेवानुगा नागान्सुगान्

मूलम् ।

सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधयामदन्तोऽधिब्रुवन्तुतेऽवन्त्वस्मान् ॥ ओं आगच्छन्तुमेपितरइमंगृह्णन्त्वपोऽञ्जलिम् ॥ इतिपितृनावाह्य ओं उदीरतामवरउत्परासउन्मध्यमाः पितरः सोम्यासः । असुर्य्यईयुरवृकाऋतज्ञास्तेनोवन्तुपितरो

---

टीका ।

सागरान्पर्वतान्सरितोमनुष्या न्यक्षान्साप्सि पिशाचान्सुपर्णान् भूतानिपशून् वनस्पतीनोषधीर्भूतग्रा: मस्तुर्विधन्तृप्यतामित्योंकारपूर्वम् ॥ ततो निवीतीमनुष्यान् सनकश्चसनन्दश्च तृतीयश्चसनातनम् । कपिलश्चासुरिश्चैव वोढुःपञ्चशिखस्तथा ॥ ततोऽपसव्यं तिलमिश्रं कव्यवाडनलंसोमंयम मर्यमणमग्निष्वात्तान्सोमपोबर्हिषदश्चयमौश्चैके ॥ यमायधर्मराजायमृत्यवेचान्त-

खदेषु ॥ ओंअद्यामुकगोत्रःपिताऽमुकशर्म्मातृप्यतामिदं सतिलजलंतस्मैस्वधाइतिप्रथमम् ओं अङ्गिरसोनः पितरइतिमन्त्रेण वाक्येन च द्वितीयम् ओंअयन्तुनः पितरइतिमन्त्रेणपूर्व्ववद्वाक्येनं च तृतीयमञ्जलिंविदद्यात् ततः ओं ऊर्जंवहन्ती रमृतमितिमन्त्रेण ओंअद्यामुकगोत्रः पितामहोऽमुकशर्म्मा तृप्यतामिदंसतिलजलंतस्मैस्वधा इतिवाक्येन च प्रथममञ्जलिम् ओंपितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः अत्रपितरोऽमीमदन्तपितरोऽतीतृपन्तपितरः पितरः शुन्धध्वम् इतिमन्त्रेण वाक्येन च द्वितीयम् ओं येचेह पितरोयेचनेहयांश्चविद्मयाँ ॥२॥ उंच न प्रविद्मत्वंवेत्थ यतितेजातवेदः स्वधाभिर्य्यज्ञ सुकृतंजुषस्वइतिमन्त्रेण

---

टीका।

कायच। वैवस्वताय कालाय सर्व्वभूतक्षयायच ॥ ओंदुम्बराय दध्नाय नीलाय परमेष्ठिने। वृकोदराय चित्राय चित्रगुप्तायवैनमः ॥ एकैकस्यतिलैर्म्मिश्रांस्त्रीँस्त्रीन्दद्याज्जलाञ्जलीन यावज्जीवकृतंपापं तत्क्षणादेवनश्यति ॥ जीवत्पितृकोऽप्येतानन्यांश्चेतरः ॥ उदीरतामङ्गिरसोनआयन्तूर्जंवहन्तीः पितृभ्योयेचेह मधुवाताऋतायतेप्र

मिश्रितस्तृप्यध्वमितिविनमोव इत्युक्त्वा मातामहानेवमाचा
र्य्यगुरुशिष्यर्त्विग्ज्ञातिदास्यवा चर्त्तन देशाद्बहिरपि

मूलम्।

वाक्येन च तृतीयमञ्जलिं पितामहाय दद्यात् ओंमधु
वाता इतिमन्त्रेण ओं अद्यामुकगोत्रः प्रपितामहोऽमु
कशर्मा तृप्यतामिदंमतिलजलं तस्मैस्वधा इतिवाक्येन
च प्रथमम् ओं मधुनक्तमुतोषस इतिमन्त्रेण वाक्येन
च द्वितीयम् ओं मधुमान्नोवनस्पतिरितिमन्त्रेणवाक्ये
न च तृतीयमञ्जलिंप्रपितामहायदद्यात् ओं तृप्यध्वम्
इतित्रिः ३ ओंनमोवःपितरोरसायेतिमन्त्रेण ओंअद्या
मुकगोत्रो मातामहोमुकशर्मा तृप्यता मिदंमतिलजलं
तस्मैस्वधाइतिवाक्येन च मातामहायाञ्जलित्रयंदद्यात्
एवमेवप्रमातामह वृद्धप्रमातामहाभ्याम्॥ ओं अद्या
मुकगोत्रामाताऽमुकदेवी तृप्यतामिदंमतिलजलं तस्यै
स्वधा इतिसकृन्मातरं तर्पयेत् एवंपितामह्यादि वृद्ध
प्रमातामह्यन्ताः॥ ततोऽन्यानपिसखिसम्बन्धिबान्ध
वादीन्कामतस्तर्पयेत्॥ ततः ओं देवासुरास्तथानागा
यक्षागन्धर्वराक्षसाः (किन्नराः)। पिशाचा गुह्यकाः
सिद्धाः कूष्माण्डास्तरवःखगाः॥ जलेचराभूनिलया
वाय्वाधाराश्चजन्तवः। तृप्तिमेतेप्रयान्त्वाशुमद्दत्तेनाम्बु
नाऽखिलाः॥ नरकेषुसमस्तेषुयातनासुचयेस्थिताः।

मूलम्।

तेषामाप्यायनायैतद्दीयते सलिलम्मया॥ येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः। ते तृप्तिमखिलां यान्तु ये चास्मत्तोयकांक्षिणः॥ इति देवविधिनाऽवसानाञ्जलिन्दद्यात् ततो भूमौ मोटकेन कुशोपर्य्यपसव्येन दक्षिणाभिमुखः स्नानवस्त्रन्निष्पीडयेदनेन मन्त्रेण ओं ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः। ते पिवन्तु मया दत्तं वस्त्रनिष्पीडनोदकम्॥ ततः स्नानाङ्गतया कात्यायनेनाभिहितं ब्रह्मादिपूजनरूपं तर्पणोत्तरकर्म्म कुर्य्यात्॥ इति कातीयतर्पणविधिः॥ ततो वस्त्रम्प्रक्षाल्य मृज्जलाभ्याम् कृहस्तौ च प्रक्षाल्याचम्य त्रकृष्णन्नमस्कृत्य जलपूर्णपात्रमादाय मौनानत्को गृहम्व्रजेत्॥

टीका।

वन्तीति अत्र सावयवमिति सम्वत्सरस्य चतुर्व्विधमिति च भूतग्रामस्य विशेषणं साकांक्षत्वात्॥ अत्र कात्यायनानुक्तं स्मृतिमहार्णवादिकृतिपद्धतिनिबन्धालिखितमपि मरीच्यादितर्पणन्देवमनुष्यतर्पणयोर्म्मध्ये च्छन्दोगानुमत्या शिष्टाः कुर्व्वन्ति॥ मात्रादितर्पणन्तु छन्दोगभिलसम्वादात् ततो देवासुरा इत्यादिमन्त्रैस्तर्पणं विष्णुपुराणानुरोधात् तर्पणोत्तरकर्म्मेति कात्यायनः॥ निष्पीडावस्त्रमाचम्य वासा नैव वरोऽद्रसाविचमेवराकृष्णैस्तान्निःक्षैरयं येदहम्प्र

चएमहत्युपस्थायसूर्य्यम्प्रदक्षिणीकृत्यनमस्कृत्य दिशश्च देवताश्च ब्रह्माग्निपृथिव्योषधिवाग्वाचस्पतिविष्णुमरुद्भ्योऽद्भ्यः पाम्पतयेवरुणायनमइति सम्वर्चसेतिमुखं विमृज्य देवागातुविदइतिविसर्ज्जयेदेष स्नानविधिरिति ॥ एषस्नानविधिरित्युपसंहारादेतदन्तः स्नानप्रयोग इतिबोध्यं जलपूर्णपात्रमिति योगियाज्ञवल्क्यः ॥ प्रक्षाल्यतीरदेशन्तुगत्वास्वम्कर्म्ममाचरेत ॥ गत्वागृहमितिशेषः ॥ तथा ॥ स्नात्वाद्भिर्व्वथाचम्यमौपानत्को ह्यसंस्पृशन् । आगतःसोदपात्रन्तु यत्र नशुचिरेवसः ॥ तेनोदकेनद्रव्याणिप्रोक्ष्याचम्यतथागृहे । ततःकर्म्माणि कुर्व्वीतनित्यंवैयानिकानि चित इतिस्नानकाण्डम् ॥

मूलम् ।

अथदेवपूजातत्रशुचिगोमयोपलिप्तेऽनिष्टगन्धशब्दवर्ज्जिते शुचौदेशेदेवासनान्नोचासनेदिवा प्राङ्मुखउदङ्मुखोवा रात्रावुदङ्मुखएवशुचिवस्त्रद्वयधरः शुचिर्म्मौनीध्यानपरायणःकामरागादिरहितः स्वस्योदक्षिणपार्श्वे पुष्पकरण्डं वामपार्श्वे जलपात्रमन्यच्चपूजोपकरणंयथा सन्निवेशमासाद्यजलपूर्णमर्घपात्रमग्रतो धृत्वातज्जलेन पूजास्थानन्द्रव्याणिच प्रोक्ष्यगन्धादिनात्मानमलङ्कृत्य पू

टीका ।

अथपूजाप्रकारमाह देवपूजेतिसाचयद्यपिव्यासेनवैष्ण-

## टीका ।

देवान्तरमभिहितातथाप्यन्ये स्तत; प्रागेवाभिधानप्रदा-
चाराच्चार्वेवकर्त्तुमुचिता । एवञ्चमध्याह्नस्नानोत्तरन्देव
पूजाविधानात्पूर्व्वाह्णएवकुर्व्वीत देवतानाञ्चपूजनमिति
मनुवचनञ्चाप्यपूजादरम् ॥ अथवाराजसभागमना
भ्युदयिकाद्यावश्यककार्य्यवतांसूर्य्योदयानन्तरमध्या-
ह्नात्प्रागपिस्नानसन्ध्यावन्दन देवपूजादिकरणन्नित्यमप्य
दुष्टमेवतथाचमहाभारतम् ॥ सुखोषितास्तांरजनीं
प्रात:सर्व्वेकृताह्निका: । त्रिविशुस्तांसभान्दिव्याह्न-
तवैरनुमोदितामिति ॥ शुचिगोमयोपपलिप्तइत्यादि
ग्रन्थगौरवभयात्तत्तत्प्रमाणवचना न्यनुल्लिख्यैवसिद्धव
ल्लिखितम् ॥ देवपूजायाञ्चसर्व्ववर्णानामधिकार: ।
क्षमाशौचन्दम:सत्यन्दानमिन्द्रियनिग्रह: । अहिंसागु
रुशुश्रूषातीर्थानुसरणन्दया । आर्ज्जवँल्लोभशून्यत्वन्देव
ब्राह्मणपूजनम् । अनभ्यसूयाचतथाधर्म्म:सामान्यउ-
च्यते इतिविष्णुवचनात् शिवपूजनेस्वधर्म्मत्यागिनोब्रा-
ह्मणेतरस्यनाधिकार: विष्णुपूजनेतुस्वधर्म्मपराणामेव
सर्व्ववर्णानामधिकार: । शालग्रामशिलाया: स्पर्शपू-
र्व्वकपूजनेस्त्रीशूद्रयोर्न्नाधिकार: अनुपनीतेनापिविष्णु
शिवौनस्पृश्यौ । इयञ्चपूजानित्याशिवभास्करमग्निञ्च
केशवञ्चोद्दिश्यकीमपि । मनसानश्चयन्यातिदेवलोका

टीका।

दधीरतिमितिकालिकापुराणात्। कौशिकीदुर्गाघ-
र्घापिभिन्नक्रमः तेनपुष्पाद्यभावेमनसापिगेतपूज्याइत्यर्थः
ब्रह्मपूजापि नित्यैवभक्त्य येदित्यधिकारेब्रह्माणंशङ्करंसू-
र्य्यन्तथैवमधुसूदनमितिकूर्म्मपुराणात्॥ एवमिष्टदेव
तापूजादिनित्या ततोगृहार्चनङ्कुर्य्यादभीष्टसुरपूजन-
मितिविष्णुपुराणात्॥ गणपतिपार्थिवशिवलिङ्गपूजा
तु काम्या एवमक्षागणपतेः कर्म्मसिद्धिम्प्राप्नोतिमानवः।
सर्व्वमूगवशीकुर्य्यान्महागणपतिःसदेतिदेवीपुराणात्।
यःकृत्वापार्थिवंलिङ्गम्पूजयेच्छुभवेदिकम्। बहैवधन-
वान् श्रीमानन्तेरुद्रोभिजायतइतिभविष्यपुराणाच्च म-
हागणपतेरित्यत्रमहत्पदंमहाभारत वत्प्रशंसार्थन्नतुतेन
रूपेणदेवतात्वप्रतिपादकमेवञ्चोक्तदेवानांसूर्य्यगणपत्य-
म्निदुर्गाशिवविष्णुादि पदवाच्यत्वेनैव देवतात्वं शि-
ष्टाचारादिति शूलपाणिवाचस्पतिमिश्रादयः एवंशिव
भास्करमग्निञ्चेत्युक्तवचनेक्रमोपिनविवक्षितः -सम्पूज्य
प्रथमंसूर्य्यमपरान्यःप्रपूजयेत् नतद्दत्तकृतम्पाद्यं सम्प्रती
च्छन्तिदेवताइतिब्रह्मपुराणान्मैथिलाचारविरोधाच्च तत
श्चगौड़मैथिलदाक्षिणात्यमतभेदेनयद्यप्येषाम्पूजनेपूर्वा
परीभावेबहवःक्रमभेदाःसन्ति तथापिप्रामाणिकमैथिला
चारसिद्धएवक्रमोऽत्रलिखितः॥ वामदेवोपाध्यायकृ-

टीका।

तसंक्षिप्तछन्दोगाह्निके शङ्करमिश्रकृताह्निकोद्धारेऽभिन
वइईमानकृताह्निकविवेके मिथिलामहाराजकुमार
श्रीमद्रुद्रेश्वरसिंहविक्रान्तकारितपूजापङ्कजभास्करेषा
ऽर्थं पदवक्रमस्तदाह॥ तत्क्रमद्दर्ति॥ पूजाधारमाह
शातातपः॥ भूमावप्सु तथाग्नौ च हृदि सूर्ये च देवताः।
नित्यमर्चेद्धिरण्ये च गोषु च ब्राह्मणेषु च॥ एषु स्थानेषु
देवताः पूज्या इत्यर्थः तत्र भूमौ जले आकाशे च भावेन
देवतामावाह्य गन्धादिभिः पूजा कार्या अग्नौ होमरूपा
सूर्य्यमण्डले ध्यानेनेति विवेकः अन्नादीनां तु देवता
न्तराधारत्वमाचारविरोधात् किन्तु पूज्यत्वमेव तथा च
मनुः पूजयेदशनं नित्यमिति॥ तथा॥ अप्सु देवा मनु
ष्याणां दिवि देवा मनीषिणाम्। काष्ठलोष्टेषु मूर्खाणा
ञ्युक्तस्यात्मनि देवताः॥ योगिना बाह्योपचाराभावेऽन्त-
र्ध्यानमेव कर्तव्यमिति तुरीयपादार्थः॥ जले शिवपूजा-
निषिद्धेति तदागमविदः॥ भागवते॥ शैली दारुम-
यी लौही लेप्या लेख्या च सैकती। मनोमयी मणिमयी
प्रतिमाष्टविधा स्मृता॥ पात्राणि तु दारुमृत्तिकापद्मप-
त्रपलाशपत्रताम्ररूप्यसुवर्णमयान्युत्तरोत्तरम्प्रशस्तानि।
विष्णोः स्नानीयदाने शङ्खः प्रशस्तः, शङ्खस्थितेन तोयेन यः स्ना
पयति केशवम्। कपिलागोसहस्रस्य दत्तस्य फलमाप्नुया

टीका ।

इतिविष्णुधर्मोत्तरीयात् दक्षिणावर्त्तस्त्वतिप्रशस्तः । शिवेतुशङ्खोनिषिद्धः नशिवेशङ्खवारिणेतिवचनात्, दक्षिणामूर्त्तिशिवपूजायां शङ्खन्न निषेधन्ति बहवः गौडास्तु सूर्य्यार्घेऽपिशङ्खन्निषेधन्ति । विष्णोर्नैवेद्यदाने ताम्रपात्रंसर्वतःप्रशस्तम्, ताम्रसुवर्ण रूप्याश्ममुक्तास्फटिकशंखशुक्तिपात्रातिरिक्तानि भग्नशरावाणिनिषिद्धानि, तानिचप्रादेशसंग्रहवितस्तिमितान्यूनमानि च चाष्टाङ्गुलन्यूनानितु नकार्याणि । शङ्खे परिमाणनियमो नास्ति ॥ उपचारास्त्वद्यपिनानाविधाः सन्तितथापि बहुभिःपरिग्रहात्तएवत्रयएवलिख्यन्ते ॥ तत्रपञ्चोपचारा विकारिकालिकापुराणम् ॥ गन्धपुष्पं तथाधूपोदीपो नैवेद्यमेवचेति ॥ अथदशोपचाराः ॥ अर्घपाद्याचमनीयमधुपर्काचमनानिच । गन्धादिपञ्चकंचेतिउपचारा दशोदिताइति ॥ अथषोडशोपचाराः ॥ आसनंस्वागतञ्चार्घ्यंपाद्यमाचमनीयकम् । मधुपर्काचमनस्नानवसनाभरणानिच । गन्धपुष्पे धूपदीपौ नैवेद्यञ्चन्दनन्तथेति ॥ क्वचिद्वन्दनन्तथेतिपाठः वन्दनम्प्रणामःस्तुतिश्च ॥ एतेकल्पाःकाम्यपूजायांयथाविभवमादेयास्तत्रापिप्रथमः कल्पोनियतएवसोऽपिपाद्यादिकानीयान्तदन्तै वविज्ञेयःनित्यपूजातुयथालब्धोपचारैरेवनिर्वा-

टीका ।

स्था ॥ अथ कतिपयान्युपचारद्रव्याणि निरूप्यन्ते ॥ पाद्यम्पादप्रक्षालनार्थञ्जलम् ॥ अर्घोदेवीपुराणेऽभिहितः । रक्तबिल्वाक्षतैः पुष्पैर्दधिदूर्वाकुशैस्तिलैः । सामान्यःसर्वदेवानामर्घोऽयम्परिकीर्तितः । अभावेदधिदूर्वादिर्मानमर्घ्यं प्रकल्पयेदिति ॥ इदन्तुमतिमत्त्वे, असतितुजलमेवनियतम् आचमनीयं शुद्धजलम् । स्नानीयानिघृततैलदधि क्षीरेक्षुरसमधुजलप्रभृतिस्नान द्रव्याणि । पुनराचमनीयंपुनः शुद्धजलैः क्षालनम्, गन्धश्चन्दनागुरुकर्पूरकुङ्कुमान्यतमस्य समुदितस्यवापङ्कम् । तत्रगन्धपदमभिलप्यैवदेयमितिकेचित् । अनुलेपनपदाभिलापि बहूनांशिष्टानांमाचारोदृश्यते । अनुलेपनानन्तरं विष्णवेयवतिलावन्र्य्भ्योऽक्षतन्ददति तवाचारएवशरणम् ॥ पुष्पाणिस्वरग्याद्दिसम्भवानि स्वामिनावाटिकापालेन वा निर्जञ्चयाद्त्तान्यन्यवाटिकासम्भवान्यपि सुरभीणिनिश्छिद्राणिप्रोक्षितानि सामान्यतोविहितानि, विशेषतस्तु जातीशमीकुब्जककुशकरवीरनागपुन्नागमल्लिकाशोकचम्पकरक्तोत्पलनीलोत्पलबकुलपद्मपुष्पाणि सर्वदेवानांविहितानि निषिद्धान्यपि मालायान्देयानि । उग्रगन्धानिविशीर्णविचितभिन्ननिर्गन्धानिसकेशकीटकीटविश्वस्रंपतितशुष्क

## टीका ।

परिधानवस्त्रभृताशुचिहस्तोद्भवानिनिषिद्धानि एवं शूद्रानीतानिपर्य्युषितान्यकालभवानिच ॥ देवोपरिधृतवस्त्रस्कन्धोपरिधृतत्वाँमहस्तधृतमन्त्रजलचालितञ्चपुष्पं हरिभक्तिनामकेग्रन्थे निषिद्धम् । कलिकातुसर्वथानिषिद्धा अभिवादनकालेऽभिवाद्याभिवादककरस्थितानिपुष्पाणिनिषिद्धानीतिकेचित् । अग्रभागत्यागात्प्रोक्षणाच्चतानिशुद्धानीत्यपरे ॥ याचितंनिष्फलं पुष्पं क्रयक्रीतन्तु निष्फलमितितुप्रवादएवमहाजनैरनादृतत्वात् तुलसीबिल्वपत्रे जलपुष्पेषुच पर्य्युषितत्वदोषोनेत्यपि प्रवाद एवेति श्रीदत्तोपाध्यायकेशवमिश्रादयः ॥ पर्य्युषितेष्वपि मालाकारगृहस्थितेषुनदोषइतिशैवागमः । मालाकारस्यशूद्रत्वेऽपितत्पुष्पग्रहणमेतत्प्रामाण्यादेव । नचमालाकारपदमत्कर्षद्विजातिपरमेव रथकाराधिकरणन्याय विरोधात् । भूमिपतितेष्वपि शुचिभूमिष्ठशेफालीबकुलेषुनदोषः ॥ हारीतः ॥ स्नानकृत्यातुयेकेचित्पुष्पंचिन्वन्तिवैद्विजाः । देवतास्तन्नगृह्णन्ति भस्मीभवतिदारुवदिति ॥ एवनिषेधोमध्याह्नस्नानविषयः प्रातःस्नानानन्तरन्देवपुष्पाहरणविधानात् । किञ्चस्वार्थपुष्पचयन एवनिषेधः स्नानकृत्यं त्वतत्त्वावलेन समानकर्तृकत्वाभावात् तदित्यस्यतेभ्यइत्यर्थः यत्पदापेक्षत्वात् छन्दसोवि

टीका ।

भक्तिलुब्ध ॥ देवनाथठक्कुरस्याप्येतदेवाभिमतम् ॥ नित्यपूजायान्तु चौर्य्यादिनाऽपि पुष्पग्रहणमदुष्टमेव देवार्थन्तु कुसुमस्तेयस्सनुरब्रवीदितिवचनात् ॥ पत्रेषु-विधिनिषेधौ पुष्पवद्‌ज्ञेयौ तत्र विल्वपत्रं सर्वेषाम्बिहित मन्यद्विस्तरभयान्न लिखितम् ॥ धूपःसघृतगुग्गुलुःसच कस्मिँश्चित्पात्रे देवतावामभागे देयः दीपे घृतम्विहितं शिवभिन्ने तैलमपि सच भूम्यतिरिक्ताधारे देवतादक्षिण-भागेऽग्रवा देयो नच निर्वापणीयः वर्तिकातु शुभ्रदशादि-भवाकार्या । नैवेद्यानि भक्ष्यभोज्यकन्दमूलफलान्नपान कादीनि विहितानि उक्तद्रव्यालाभे केवलमामान्न मपि निवेदनीयम् । एतेचोपचारा दक्षिणहस्ते नैवदेयाः कर्मोपदिश्यते यत्र कर्तुरङ्गन्नचोच्यते । दक्षिणस्तत्र विज्ञेयः कर्मणाम्पारगः करइतिछन्दोगपरिशिष्टीय परिभाषाबलात् तत्रापि देवतीर्थेनैव सम्मार्ज्जनार्चन बलिकर्मभोजनप्रदानानि दैवेनेतिहारीतवचनात् एवञ्चाञ्जलिपूजायांयद्यपि शिष्टाचारोऽस्ति तथापि सत्प्रमाणं श्रुतिस्मृतिविहितो धर्मस्तदलाभे शिष्टाचारः प्रमाणमिति वसिष्ठोक्तेरिति निबन्धारः । घण्टावादनन्तु वामहस्तेनैव दक्षिणहस्तस्यार्चादिनाऽव्यग्रत्वादाच मनकाले वामहस्तेन जलपात्र धारणवदितिहरिभक्ति

टीका ।

दीपिका । सर्वत्रोपचारा अर्घ्यपात्रस्थतीर्थेनस्नानकरणेच विप्रोक्षदेयाः । पूजातूत्तरा भिमुखेनैवकार्य्या तथा-पुदङ्मुखः कुर्य्याद्देवकार्य्यमदैवष्टि । शिवार्चनं सदाप्यैवं शुचिः कुर्य्यादुदङ्मुखइति गोभिलवचनेन शिवपूजाया उत्तराभिमुखत्वनियमात्तत्समानन्यायात्‌काल्यदेवपूजाया अपि तथैवकर्तुमुचितत्वात् तदसम्भवेप्राङ्मुखेनैशान्याभि मुखेन वा । स्थिरप्रतिमायां सम्मुखस्तिष्ठन्नेवकुर्य्यात् अर्चायामथसम्मुखइतिवचनाच्छिष्टाचाराच्च ॥ दाक्षि-णात्यास्तु प्राङ्मुखीः प्रतिमा उत्तराभिमुखो यजेदुत्तरा भिमुखीः प्राङ्मुखइतिवदन्ति ॥ सूर्यपूजेति ॥ यद्यपि स्वैर्मन्त्रैरर्चयेन्नित्यम्पत्रैः पुष्पैस्तथाम्बुभिरितिकूर्मपु-राणवचना त्प्रत्युपचारंमन्त्रान्वयोयुक्तइतितथैवमूलेऽ-लेखि तथाप्याधुनिकाचारात्पुष्पमात्रेमन्त्रमनुगमयन्ति ॥

मूलम् ।

आमारभेत तत्क्रमः ॥ प्रथमंसूर्य्यपूजा ध्यात्वाऽचन-पुष्पाण्यादाय ओं भूर्भुवःस्वर्भगवन्सूर्य्य इहागच्छइह तिष्ठेत्यावाह्यस्थापयित्वा पूजयेदनेनमन्त्रेण ओं आकृ-ष्णेनरजसा वर्तमानोनिवेशयन्नमृतम्मर्त्यञ्च। हिरण्य-येनसवितारथेनादेवो यातिभुवनानिपश्यन् ॥ एतानि पाद्यार्घ्याचमनीयस्नानीयपुनराचमनीयानि ओंसूर्य्याय

नमः, इदमनुलेपनम्, इदंरक्तचन्दनम्, इदमक्षतम्, एतानिपुष्पाणि३ एषधूपः एषदीपः इदंनैवेद्यमिति क्रमेणपूजयेत् ततोमन्त्रम्पठित्वासंप्तकृत्वः प्रदक्षिणी कृत्यप्रणम्यस्तुत्वाध्यायेत् ॥ ततोगणपतिन्ध्यात्वा ओं भूर्भुवःस्वर्भगवन् गणपतेइहागच्छइहतिष्ठेत्या वाह्यस्थापयित्वा ओं गणानान्त्वागणपतिᳬहवामहे प्रियाणान्त्वाप्रियपतिᳬहवामहे निधीनान्त्वानिधिप तिᳬहवामहे व्वसोममआहमजानिगर्भधमात्वमजासि- गर्भधम् ॥ इतिमन्त्रेणपाद्यादिभिः ओं गणपतयेनम

---

टीका।

एवमन्यदेवतामन्त्रेष्वपि बोध्यम् ॥ स्त्रीशूद्राभ्यान्नम- स्कारेणमन्त्रेण पौराणिक मन्त्रेण वा पूजाकार्या। सूर्यपूजनेपुष्पेषु पिण्डीतगरं विहितनिषिद्धमपराजिता कुसुमवनतगरीप्रभृतिपुष्पाणिनिषिद्धानि बिल्वपत्रं न्दमनकद्रोण मन्दारशिंशपापुष्पाण्यपिनिषिद्धानीति केचित् ॥ सप्तकृत्वःप्रदक्षिणी कृत्येति ॥ तथाचवचनम्, एकञ्चण्डयांरवौसप्तत्रीणिकुर्याद्विनायके। चत्वारिकेशवे कुर्य्याच्छिवेचार्द्धप्रदक्षिणमिति ॥ अनुक्तदेवानान्तुनि श्चार्य्यमाचारात् ततोगणपतिपूजनम् तत्राशोकतगर वासन्तीपुष्पाणि तुलसीपत्राणिचनिषिद्धानि, बिल्वपत्र मपिकश्चिन्निषेधति ॥

मूलम् ।

इत्यनेनच वाक्येन पूर्वोक्तक्रमेणपूजयेत् ॥ ततोऽग्निं ध्यात्वा ओं भूर्भुवःस्वर्भगवन्नग्ने इहागच्छ इहतिष्ठ इत्यावाह्यस्थापयित्वा ओं अग्निन्दूतं पुरोदधे हव्यवाहमुपब्रुवे । देवाँ२ ॥ आसादयादिह ॥ इतिमन्त्रेण ओं अग्नयेनमइत्यनेन वाक्येनच पाद्यादिभिःपूजयेत् ॥ ततोदुर्गांध्यात्वा ओं भूर्भुवः स्वर्भगवतिदुर्गेइहागच्छइह तिष्ठ इत्यावाह्यस्थापयित्वा ओं अम्बे अम्बिकेऽम्बालिके नमानयति कश्चन । ससस्त्यश्वकः सुभद्रिकांकाम्पील वासिनीम् ॥ इतिमन्त्रेण ओं दुर्गायैनमइतिवाक्येन चपाद्यादिभिःपूजयेत् ततोनार्मदलिङ्गमावाहनमकृत्वैव गङ्गातिरिक्तपात्रेण ओं नमस्तइत्यादिभिःषोड़शमन्त्रैः षट्षष्टिमन्त्रैर्व्वाजलन्दत्त्वा ओंत्र्यम्बकंयजामहेसुगन्धिं

टीका ।

ततोमूलोक्तरीत्या अग्निं सम्पूज्यदुर्गांपूजयेत् । दुर्गाया अपराजिताकरवीरार्कमन्दार प्रभृतिपुष्पाणिप्रशस्तानि, देवीनामर्कमन्दाराविति शातातपीयनिषेधोदुर्गेतरदेवीविषयः । कोमलाङ्कुरातिरिक्तदुर्व्वानिषिद्धा ॥ ततः शिवपूजाविधिमुपक्रमते ॥ नार्मदलिङ्गइति ॥ नार्मदं हरिरङ्गश्चमिति वचनादिदमतिप्रशस्तं तदभावेहिरण्मयादिलिङ्गमपिपूज्यम् । बाणलिङ्गरूपलंनिषिद्ध

टीका।

पञ्चजम्बूफलाकारस्वनिग्रशस्तम्॥ अवाबाइनप्रति-
ष्ठा विसर्जनानिनभवनी तिस्मृतिदीपिका। अस्य
कमलकुमुदार्क धुस्तूर चम्पक कारवीरा पराजिताद्यमी
प्रभृतीनि पुष्पाणिप्रशस्तानि। अङ्कोलकुन्दकेतकोवक
ज्ञनिम्बधातकीवन्धूकभंटिकामल्लिकमङ्गलिकाश्वेता-
पराजितामाधवी विभीतकयूथिकाशिरीष श्वेतपाट

मूलम्।

पुष्पिवर्द्धनम्। उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमा-
मृतादितिमन्त्रेण ओंनमःशम्भवायचेतिमन्त्रेणवा ओं
शिवायनमइतिवाक्येनच पाद्यादिभिः पूर्ववत्पूजयेत्॥
ततोविष्णुंध्यात्वा शालग्रामशिलाद्यामावाहनमकृत्वैव
पुरुषसूक्तेनजलन्दद्यात्॥ ओंसहस्रशीर्षापुरुषः सह
स्राक्षः सहस्रपात्। सभूमिꣳसर्वतस्पृत्वात्यतिष्ठद्द-
शाङ्गुलम्॥ १॥ पुरुषएवेदꣳसर्वंयद्भूतंयच्चभाव्यम्।
उतामृतत्वस्येशानोयदन्नेनातिरोहति॥ २॥ एता-
वानस्यमहिमातोज्यायाꣳश्चपूरुषः। पादोऽस्यविश्वाभू
तानि त्रिपादस्यामृतन्दिवि॥ ३॥ त्रिपादूर्द्ध्व उदै-
त्पुरुषःपादोऽस्येहाभवत्पुनः। ततोविष्वङ्व्यक्राम-
त्साशनानशनेअभि॥ ४॥ ततोविराडजायतविराजो
अधिपूरुषः। सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः॥५॥

टीका ।

त्तासर्वसिन्दुशाराणांपुष्पाणिनिषिद्धानि ॥ वर्षंव्या-
पिशिवपूजायाकुन्दपुष्पंमहद्येविहितम् ॥ बिल्वपत्र
मतिप्रियम् ॥ अथ विष्णुपूजाविधिमुपक्रमते ॥ शा-
लग्रामेति ॥ तत्पूर्वंसायांलिङ्गपुराणम् ॥ कामासक्तो
ऽपियोनित्यम्भक्तिभावविवर्जितः । शालग्रामशिलाचक्रं
पूजयेत्सोऽच्युतोभवेदिति ॥ तदभावेप्रागुक्तपूजासा
मान्याधारेष्वपि ॥ आवाहनमकुर्वन्निति ॥ शालग्राम
शिलायत्र तत्रसन्निहितोहरिरितिवचनात्तत्सान्निध्यस्य
स्वतःसिद्धेरितिभावः ॥ आचारोऽप्येवम् ॥ हरिभक्ति
दीपिकायाङ्गोश्वरमिश्रास्तु मन्त्रकरणकसान्निध्यबुद्ध
रेशाद्दृष्टजनकत्वा च्छालग्रामशिलायामप्यावाहनादिक
मवति यथा अरुणयापिङ्गाक्ष्यैकहायन्यागवासोमं क्री
णातीति श्रुतिबोधितः सोमक्रयोयस्यापिगृहेसोमस्ते
नापिक्रियतएवादृष्टार्थत्वादितिवदन्ति ॥ सहस्रशीर्षेति॥

मूलम् ।

तस्माद्यज्ञात्सर्वहुतःसम्भृतंपृषदाज्यम् । पशूंस्तांश्चक्रे
वायव्यानारण्याग्राम्याश्चये ॥ ६ ॥ तस्माद्यज्ञात्सर्वहुत
ऋचःसामानिजज्ञिरे । छन्दांᳩसिजज्ञिरे तस्माद्यजु
स्तस्मादजायत ॥ ७ ॥ तस्मादश्वाअजायन्तयेकेचोभया
दतः । गावोहजज्ञिरेतस्मात्तस्माज्जाताअजावयः ॥८॥

मूलम्।

तंयज्ञम्बर्हिषिप्रौक्षन्पुरुषञ्जातमग्रत:। तेनदेवाअय जन्तसाध्याऋषयश्चये॥ ९॥ यत्पुरुषंव्यदधु: कतिधा व्यकल्पयन्। मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादा उच्येते॥ १०॥ ब्राह्मणोऽस्यमुखमासीद्बाहूराजन्य: कृत:। ऊरूतदस्ययद्वैश्य:पद्भ्यांशूद्रोऽअजायत॥११॥ चन्द्रमामनसोजातश्चक्षो:सूर्य्योअजायत। श्रोत्राद्वायुश्च प्राणश्चमुखादग्निरजायत॥ १२॥ नाभ्याआसीदन्त रिक्षंशीर्ष्णोद्यौ:समवर्त्तत। पद्भ्याम्भूमिर्दिश:श्रोत्रा त्तथालोकाँ२॥ अकल्पयन्॥ १३॥ यत्पुरुषेणहविषा देवा यज्ञमतन्वत। वसन्तोऽस्यासीदाज्यंग्रीष्मइध्म: शरद्धवि:॥ १४॥ सप्तास्यासन्परिधयस्त्रि:सप्तसमिध: कृता:। देवायद्यज्ञन्तन्वानाअबध्नन्पुरुषम्पशुम्॥१५॥ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्यासन्। तेहनाकम्महिमान:सचन्तयत्रपूर्व्वेसाध्या:सन्तिदेवा: १६

---

टीका।

यद्यपि विष्णुपूजनेषोडशोपचारे पुरुषसूक्तस्य तत्तन्म न्त्रैश्च तत्तदुपचारदानेविनियोगो नरसिंहपुराणेदर्शिते तथाहि, आद्ययाऽऽवाहयेद्देवमृचातु पुरुषोत्तमम्। द्वितीययासनन्दद्यात्पाद्यञ्चैवतृतीयया॥ चतुर्थ्याऽर्घ्यं

मूलम्।

ततः ओंविष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसि विष्णोर्ध्रुवोसिवैष्णवमसिविष्णवेत्वा॥ एतानिपाद्यार्घाचमनीय स्नानीयपुनराचमनीयानि ओंविष्णवेनमः एवमनुलेपनयवतिलपुष्पतुलसीपत्रधूपदीपनैवेद्यादीनि दद्यात्॥ ततः ओं नमोनारायणाय इत्यष्टाक्षरम् ओं नमोभगवतेवासुदेवाय इतिद्वादशाक्षरं वा विष्णुमन्त्रं यथाशक्तिजपित्वा चतुष्प्रदक्षिणीकृत्य प्रणमेत्स्वाभिमतस्तवा दकञ्चपठेत्॥ ततइष्टदेवतापूजा॥ साचदेवताभेदेन कल्पभेदेनच नानाविधाऽतोन लिखिता किन्तु

टीका।

प्रदातव्यं पञ्चम्याचमनीयकम्। षष्ठ्यास्नानं प्रकुर्वीत सप्तम्यावस्त्रमेवच॥ यज्ञोपवीतमष्टम्या नवम्यागन्धमेवच। दशम्यापुष्पदानंस्यादेकादश्यातुधूपकम्॥ द्वादश्यादीपकन्दद्यात् त्रयोदश्याचरुन्तथा। चतुर्दश्याऽञ्जलिकृत्वा पञ्चदश्याप्रदक्षिणम्॥ षोडश्योद्वासनङ्कुर्य्याच्छेषकर्माणिपूर्व्ववत्। स्नानेवस्त्रे चनैवेद्ये दद्यादाचमनीयकम्॥ षण्मासात्सिद्धिमाप्नोतिदेवदेवंसमर्च्चयन् दद्यात्पुरुषसूक्तेन यःपुष्पाण्यपएववा॥ अर्चितंस्यात्जगदिदन्तेनसर्व्वंचराचरमिति॥ चरुं नैवेद्यम्, उद्वासनं विसर्ज्जनम्, स्नानाद्यनन्तरमाचमनीयदानमपिपञ्चम्यै

मूलम्।

स्वस्वगुरूपदिष्टप्रकारेणकर्त्तव्या॥ ततः पार्थिवशिव लिङ्गपूजनम्॥ भस्मत्रिपुण्ड्रं विधायरुद्राक्षमाला न्धृत्वा ओँ हरायनमः इतिशुद्धमृत्तिकाङ्गृहीत्वा ओँ महेश्वरायनमः इतिसङ्घट्टा ओँ शूलपाणयेनमः ओँ शूलपाणेइहसुप्रतिष्ठितोभव इतिपात्रेप्रतिष्ठाप्य ओँ ध्यायेन्नित्यंमहेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्ना कल्पोज्ज्वलाङ्गम्परशुमृगवराभीतिहस्तम्प्रसन्नम्। प- द्मासीनंसमन्तात्स्तुत ममरगणैर्व्याघ्रकृत्तिंवसानं विश्वाद्यं विश्ववीजन्निखिलभयहरम्पञ्चवक्त्रं त्रिनेत्रम्॥

---

टीका।

वक्तव्येतिबोध्यं तथाप्याधुनिकानामलसानामाचारात्प् रुषसूक्तेन जलन्दद्यादितिमूले लिखितम्॥ यद्यपिच कुचिन्निबन्धे ऽक्षतरक्तचन्दनयोर्विधानंदृश्यते तथाप्या चारविरोधान्नतेदद्दतिशिष्टाः॥ एवंनैवेद्ये मांसमपि॥ पुष्पाण्यगस्त्यापराजिता सर्व्ववर्णोत्पलकदम्बकरवीरक र्णिकारकिंशुककुंकुमकुन्दकुमुदकुसुम्भचम्पकतगरद्रोण नवमल्लिकायूथीबन्धूकशमी बकुलशतपत्रप्रभृतीनि प्र- शस्तानि, निषिद्धान्यर्ककण्टकारी काम्रतालक्षेतापरा जिताधुस्तूरशाल्मलीप्रभृतीनि। नृसिंहेतरविष्णुमूर्त्तौ

टीका ।

केतक्यपिनिषिद्धा । दूर्व्वादलबिल्वपत्रतुलसीपत्राण्य-
तिप्रियाणि ॥ धूपाः मशर्कराज्यमहिषाख्यगुग्गुलजटा
मसीप्रभृतयः शस्ताः ॥ स्कन्दपुराणे ॥ गीतं वाद्यञ्च
नृत्यञ्चतथापुस्तकवाचनम् । पूजाकालेतुविप्रेन्द्रसर्व्वदा
केशवप्रियम् ॥ गीतनृत्याद्यभावेऽपिकुर्य्यात्पुस्तकवाचन
मिति ॥ पुस्तकवाचनं गीताभागवतादिपाठः । गरु-
डचिह्नितघण्टावाद्यमारातिकञ्च विष्णोरतिप्रियम् ॥
अथेष्टदेवतापूजाप्रकारः पूजाप्रदीपपूजापङ्कजभास्करा
दिषुजिज्ञासुभिर्द्रष्टव्यः ॥ अथ पार्थिवशिवलिङ्गपूजेति
कर्तव्यतामाहभस्मतिपुण्ड्रमित्यादिना ॥ काम्यशिव

---

मूलम् ।

इतिध्यात्वा ओं पिनाकधृग्जेनमः ओं पिनाकधृगिहाग
च्छइहतिष्ठ इत्यावाह्यस्थापयित्वा ओं पशुपतयेनमः
एतानिपाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि ओं
पशुपतयेनमः ओं नमः शिवाय इदमनुलेपनम्, ओं
शिवायनमः इदमक्षतम्, एतानिपुष्पाणि, एतानिबि-
ल्वपत्राणि, एषधूपः, एषदीपः, इदंनैवेद्यम् ओं शि-
वायनमः इतिक्रमेणपूजयेत् । ततोवामावर्त्तनलिङ्ग-
पूर्व्वाद्याग्नेय्यन्तमष्टासुदिक्षुवेद्यामष्टमूर्तीर्गन्धाक्षतपुष्पैः
क्रमेणवक्ष्यमाणमन्त्रैः पूजयेत् ओंशर्व्वायक्षितिमूर्त्तये-

मूलम्।

नमः १ ओंभवायजलमूर्त्तयेनमः २ ओंरुद्रायाग्निमूर्त्तये नमः ३ ओं उग्रायवायुमूर्त्तयेनमः ४ ओंभीमायाकाश मूर्त्तयेनमः ५ ओंपशुपतयेयजमानमूर्त्तयेनमः ६ ओंमहा देवाय सोममूर्त्तयेनमः ७ ओं ईशानायसूर्य्यमूर्त्तयेनमः ८॥ ततः सकलदेवपूजोपकरणद्रव्यशेषैः ओंब्रह्मणेनमः इतिभूम्यवेक देवब्रह्मपूजांकुर्य्यात्। तत आवाहित

---

टीका।

पूजाकाले भस्मत्रिपुण्ड्रकरणरुद्राक्षधारणयोरावश्यक त्वम् विनाभस्मत्रिपुंड्रं वा विनारुद्राक्षमालया। पूजि- तोऽपिमहादेवोनस्यात्तस्यफलप्रद इतिवचनात्॥ शुभ मृत्तिकाङ्गृहीत्वेति॥ पार्थिवलिङ्गपूजाफलंभविष्य- पुराणे॥ यः कृत्वापार्थिवंलिङ्ग मन्त्रयेच्च भवेदिकम्। इहैवधनवान्श्रीमानन्ते रुद्रोऽभिजायतइति॥ शु- भवेदिकं शोभनपिण्डिकायुक्तम्॥ ब्रह्मपुराणे॥ हरोमहेश्वरश्चैव शूलपाणिःपिनाकधृक्। पशुपतिः शिवश्चैव महादेवेतिसञ्चयेत्॥ मृत्तिकाग्रहणञ्चैव घट्टनेचप्रतिष्ठने। आवाहनेच स्नपने पूजनेच विस- र्ज्जने॥ हरादीनिचनामानि महादेवान्तानिकीर्त्तयेत्॥ एव हरादिनाम्नां मृत्तिकाग्रहणादिषु यथासंख्यमन्व- यः॥ भविष्यपुराणे॥ शर्व्वायक्षितिमूर्त्तयेनम इत्यादौ

## टीका।

मष्टौमन्त्रानभिधाय॥ मूर्त्तयोऽष्टौशिवस्यैताः पूर्व्वादि क्रमयोगतः। आमे ह्यन्तोः प्रपूज्याद्यवेद्यांलिङ्गे शिव मर्च्चयेदिति॥ ओंनमःशिवायेतिमन्त्रेण लिंगेशिवंसम्पूज्याष्टौमूर्त्तयः पूज्याइत्यर्थः अत्रपाठक्रममनादृत्यार्थक्रममनुरुध्यबोयंव्याख्या, अग्निहोत्रंजुहोतियवागूंपचतीत्यत्रेव॥ अत्र पिनाकधृग्जनम इतिमन्त्रस्यैव प्राणप्रतिष्ठा प्रयोजकत्वात् ओं मनोजूतिर्जुषता माज्यस्यबृहस्पतिर्यज्ञ मिमन्तनोत्वरिष्टंयज्ञं समिमन्दधातुविश्वे देवासइहमादयन्तामोंप्रतिष्ठ॥ इतिवैदिक मन्त्रंपठन्तिमाम्प्रदायिकाः॥ अत्रदम्बोध्यम्॥ हरो महेश्वरश्च शूलपाणिः पिनाकधृगिति ब्रह्मपुराणीय वचने पिनाकधृगितिरूपंपान्तस्य जान्तस्यचसम्भवति तत्र प्रथमायान्तुनरूपविशेषः किन्तुचतुर्थ्याम्। यद्यपि शूलेनधृष्णोतिप्रगल्भते इतिशूलधृक्शूलधृषौ, ऋत्विगदधृगिति क्विनोविधानादन्यत्रापि पदान्तविधुर्येकुत्व मिति जिधृषाप्रागल्भ्ये इतिधातोमनोरमातत्वबोधिन्यु क्तरीत्याऽत्रापि पिनाकधृषेनमइत्येवयुक्तं तथापि सम्प्रदायानुसारात्पिनाकधृजेनमइत्येवमूले लिखितम् पिनाकंधर्जति/धारयतीतिपिनाकधृक् क्विप्चेतिकर्त्तरि क्विप् धातूनामनेकार्थत्वाद्धत्यर्थोऽपि धृजिर्धारणार्थः,

मूलम् ।

पूजितान्देवान्यथाक्रमम् ओंभगवन्नमुकदेवपूजितोऽसि प्रसीदक्षमस्व इतिप्राथ्यं स्वस्थानङ्गच्छेति विसर्ज्जयेत्, देव्यांस्त्रौलिङ्गोक्तः, पार्थिवशिवलिङ्गे ओंमहादेवायनमः ओं महादेवपूजितोऽसिप्रसीद क्षमस्व इतिप्राथ्यं स्व-

---

टीका ।

शूलंशूलादिनिष्कृष्यददौतस्मै पिनाकधृगितिमत्प्रणती श्लोकव्याख्यायां पुष्पाञ्जलिसमाख्यायामप्येतयैवरीत्या जाग्रत्त्वमूरीकृतम् ॥ शिवस्यमुखवाद्यमतिप्रियम् । गन्धपुष्पनमस्कारैर्म्मुखवाद्यैश्चसर्व्वतः । योमामर्च्चयते तत्र तस्यतुष्याम्यहंसदेति शिवपुराणात् ॥ यत्तुकेचित्पार्थिवशिवलिङ्गपूजातः प्राक्कीर्तिमुखपूजनङ्कुर्व्वन्ति प्रमाणयन्तिच, त्वंकीर्तिमुखसंज्ञोऽसिभवमद्द्वारगःसदा । त्वदर्चा येनकुर्वन्तिनैवतेमत्प्रियङ्करा इतिपद्मपुराणीयस्पुरुषंप्रतिशिववाक्यन्तन्मैथिलनिबन्धा धृतत्वात्प्रामाणिकानामनुतिष्ठन्ति ॥ ब्रह्मपूजामिति ॥ यद्यपिपद्मपुराणेनतुतेब्राह्मणाःपूजाङ्करिष्यन्तिकदाचनेतिसावित्रीशापेनब्रह्मणोऽपूज्यत्वंलभ्यते तथापि अद्यप्रभृतियःपूजामस्ययुक्ताङ्करिष्यति ॥ तवमर्त्योधरापृष्ठेयथान्येषांदिवौकसाम् । भविष्यतिचतद्गेहेदरिद्रौदुःखसम्युतं इतिस्कन्दपुराणेकवाक्यतानुरोधात्समन्त्रकपूजाविषय

मूलम् ।

स्थानेऽस्मिन्नितिविसर्ज्जयेत् ओं चण्डेश्वराय नमः इति निर्माल्यं क्षिपेत् ततस्ताम्रादिपात्रस्थं सतुलसीपत्रं विष्णोः पादोदकं पीत्वा शिरसा धारयेदनेन ओं अकालमृत्युहरणं सर्व्वव्याधिविनाशनम् । विष्णोः पादोदकं पीत्वा शिरसा धारयाम्यहम् ।. नैवेद्यञ्चभुञ्जीत, अन्यं पामपिस्वेष्ट

टीका ।

नात् ॥ आवाहितपूजितानिति पूर्व्वमावाहितान् पश्चात् पूजितानित्यर्थः विसर्ज्जनस्यावाहनपूर्व्वकत्वात्तदभावे निवृत्तिरेवेतिभावः तेनशालग्रामशिला बाणलिङ्गप्रतिष्ठितप्रतिमादिषुनविसर्ज्जनमिति क्वचिन्निवर्ज्जे देवतानान्निर्म्माल्यक्षेपणविशेषउक्तः ओं चण्डभास्कराय नमः इतिसूर्य्यस्य ओं चण्डेश्वराय नम इतिशिवस्य ओं विष्वक्सेनाय नम इतिविष्णोः ओं उच्छिष्टचाण्डालिन्यै नम इत्येशान्यामण्डलङ्कृत्वा शक्तिस्वयनिर्म्माल्यं क्षिपेदिति ॥ निर्म्माल्यलङ्घनेदोषउक्तोनरसिंहपुराणे भक्तानुप्रतिमारदेन । अतः प्रभृतिनिर्म्माल्यमालङ्घ्य मज्जामते । नरसिंहस्यदेवस्यतथान्यं षान्दिवौकसाम् ॥ भविष्यपुराणे । यथानलङ्घयेत्कश्चित्स्नपनम्भास्करस्यच तथाकार्य्यंप्रयत्नेन लङ्घितंह्यशुभावहम् । तास्मिंस्तं नरकहर्त्तालङ्घयेद्यःसगौरवमिति । चरणोदकनैवेद्य

मूलम् ।

देवानाम्पादोदकनैवेद्यं गृह्णीयात् सूर्य्यस्यनैवेद्यमग्निभ्यः शिवस्यभस्माङ्गिभ्यस्तपस्विभ्योदुर्गायाःस्त्रीभ्योविष्णोः सात्वतेभ्यश्चप्रतिपादयेत् ॥ निर्म्माल्यञ्चतरुमूलेजलेवा क्षिपेद्यथानकोपिलङ्घयेत् ॥ वैश्वदेवकरणेतुतदनन्तरमेवपादोदकादियहणम् ॥ इति पूजाविधिः ॥

टीका ।

अप्यवश्यग्राह्यं तथाच विष्णुयामलेपीत्वापादोदकन्देवि नैवेद्यं स्वयमुद्धरेत् ॥ त्यजेत्पादोदकंयस्तुनैवेद्यञ्चाँत्यजेच्चयः ॥ षष्ठिवर्षसहस्राणिरौरवेनरकेपचेत् ॥ उद्धरेत् भुञ्जीतकेभ्यःकस्यनैवेद्यन्देयमित्याहब्रह्मपुराणे ॥ विप्रेभ्यस्त्वथतद्देयंब्रह्मणेयन्निवेदितम् ॥ वैष्णवंसात्वतेभ्यश्च भस्माङ्गिभ्यश्चशाम्भवम् ॥ सौरमग्निभ्यःशाक्येभ्यस्तायिनेयन्निवेदितम् ॥ भूतप्रेतपिशाचेभ्योयत्तद्दीनेषुनिःक्षिपेदिति ॥ सात्वतोविष्णोरायतनेपूजाधिकारी । तायी बुद्धः । शाक्योबौद्धभिक्षुः इतिपूजा ॥ अथदिनपञ्चमभागकृत्यंवैश्वदेवबलिकर्म्मणीव्याख्यायेते ॥ तत्रमनुः ॥

मूलम् ।

अथ वैश्वदेवबलिकर्म्मणी ॥ पर्य्युक्षितेसमिद्धेऽग्नौतदभावेजलेस्थलेवापाकायमुद्धृत्य फलमूलादिना वा प्राङ्मुखः पञ्चाहुतीर्ज्जुहुयात ॥

## टीका ।

पञ्चसूना गृहस्थस्य चुल्लीपेषण्युपस्करः । कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥ तासां क्रमेण सर्व्वासां निष्कृत्यर्थं महर्षिभिः ॥ पञ्च कॢप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् । सूना पशुवधस्थानं सेव सूनाः हिंसास्थानयोगात् ॥ चुल्ली पाकसाधनो प्रसिद्धा पेषणी दृषदुपलात्मिका उपस्करः शूर्पसम्मार्ज्जन्यादिः कण्डनी उदूखलमुसले उदकुम्भो जलाधारकलशः एते गृहस्थस्य क्षुद्रकीटपतङ्गादिहिंसाहेतुत्वेन सूनाः याः प्रवर्त्तयन् सूनादोषेण सम्बध्यते । तासां प्रतिक्रियार्थमेते वक्ष्यमाणयज्ञा गृहस्थानां कर्त्तव्यत्वेनोक्ता मन्वादिभिरित्यर्थः ॥ तथा ॥ अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् । पञ्चैतान्यो महायज्ञान्न हापयति शक्तितः । स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते देवताऽतिथिभृत्यानां पितॄणामात्मनश्च यः न निर्व्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥ व्यासः ॥ वैश्वदेवन्तु कुर्व्वीत स्वशाखाविहितन्तु यत् ॥ संस्कृतान्नैर्हविष्यैश्च हविष्यव्यञ्जनान्वितैः ॥ तैरेवान्नैर्बलिन्दद्यात्क्षेपमाप्यवारिणा । कृतापसव्यः स्वधया पितृन्दक्षिणतो हरेत् छन्दोगपरिशिष्टे ॥ हविष्येषु यवा मुख्यास्तदनुव्रीहयः स्मृताः ॥ माषकोद्रवगौरादीन्सर्व्वालाभेऽपि वर्ज्जयेत् ॥

टीका।

गौर: ॥ सितसर्षप: ॥ आदिपदेनयवकमसूरकुलत्थानां शङ्खलिखितोक्तानांसंग्रह: ॥ आपस्तम्ब: ॥ बलीना न्तस्य तस्यदेशस्यसंस्कारोहस्तेनप्रमृज्यावोक्ष्यन्युप्य प- श्चात्परिषेचनम् ॥ तस्यतस्य त्वभ्यासात्प्रत्येकमाज्यना दिकर्म्मभिद्यतेसमिधोयजति तनूनपातयजतीत्यव- वत् ॥ तथाचद्वितीयेजैमिनि: ॥ एकस्य वंपुन: श्रु- तिरविशेषादनर्थकं हिस्यादिति ॥ अवोक्ष्यसिक्ताव्यु प्यबलिन्दत्वा। परिषेचनंबलेरूपरिसेक: ॥ एतद्बलि दानमविभक्तभ्रातृणांज्येष्ठेनैवकार्य्यम् ॥ विभक्तद्रव्या णाममुख्यस्याप्यौपाकेतेनतूष्णीमेवाग्नौकिञ्चित्प्रक्षिप्यकि ञ्चिद्ब्राह्मणायदत्वाभोक्तव्यम् ॥ पश्चात्पाकेतुनकिमपि कर्त्तव्यम् ॥ वाजसनेयिगृह्येपारस्कर: ॥ अथात:पञ्चम हायज्ञावैश्वदेवादन्नात्पर्य्युक्ष्यस्वाहाकारैर्जुहुयाद्ब्रह्मणे प्रजापतयेगृह्याभ्य:कश्यपायानुमतयइति भूतगृह्ये भ्योमणिकेत्रीन्पर्जन्यायाद्भ्य: पृथिव्यै धात्रेविधात्रेच द्वार्य्ययो: प्रतिदिशंवायवेदिशाञ्चमध्येत्रीन् ब्रह्मणेऽन्त रिक्षायसूर्य्यायविश्वेभ्योदेवेभ्यो विश्वेभ्यश्चभूतेभ्यस्तेषा मुत्तरतउषसेभूतानाञ्चपतयेपरंपितृभ्य: स्वधानमइति दक्षिणत: पात्रन्निर्णिज्योत्तरापरस्यान्दिशिनिनयेद्यक्ष्मै तत्तइति ॥ अथसमावर्त्तनानन्तरकृतविवाहस्यपञ्चम

मूलम् ।

सर्व्वबलिस्थानान्यभ्युक्ष्य तदुपरि बलीन्दद्यात्तदुपरि जले नाभिषिञ्चेच्च ओं ब्रह्मणेस्वाहा १ ओं प्रजापतयेस्वा- हा २ इतिमनसा ओं गृह्याभ्यःस्वाहा ३ ओं कश्यपा यस्वाहा ४ ओं अनुमतयेस्वाहा ५ ततोहुतशेषान्ने

टीका ।

हायज्ञेष्वधिकारः ॥ अतोहितोः पञ्चमहायज्ञाकामहाय ज्ञादेवयज्ञादिरूपाव्याख्यास्यन्तइतिशेषः तत्रपञ्चसुब्रह्म णेस्वाहेत्येवमादिहोमात्मकः पूर्व्वोदेवयज्ञःततोमणिके भ्योनमइत्येवमादिबलिरूपोभूतयज्ञः ततःपितृभ्यःस्वधानम इतिबलिदानंपितृभ्यः हन्तकारातिथिपूजादिकोमनु ष्ययज्ञः पञ्चमोब्रह्मयज्ञः सचतर्पणात्प्राक्तस्मिन्तदाना वकर्त्तव्यः कर्त्तव्योवामनुष्ययज्ञात्प्राक् ऋचंवाचमित्या- दिशास्त्राध्यायपाठरूपोब्रह्मयज्ञः ॥ वैश्वदेवादिति । विश्वदेवबल्यर्थसाधितात् ॥ यद्यपितदन्नस्यबल्यन्तरे भवत्येवविनियोगस्तथापि प्राधान्याद्यन्निर्देशोमन्नया- मादिवद्भूमाधिकरणन्यायाच्चउद्धृत्येतिशेषः अग्नादित्य बल्यन्तेऽपिपञ्चमी अन्नस्पावान्तरंकृत्वापर्य्युक्ष्यवारिधा- रयावेष्टयित्वाअग्निमितिशेषः । स्वाहाकारैरिति । वर्णसङ्घाताकारः । उच्चैस्तरांवावषट्कारइतिनिर्दे शात् अत्रपर्य्युक्षणस्वाहाकारौयद्यपि होमसामान्यध-

मूलम् ।

नोदकपात्रसग्निधौभूमौबलिदानत्रयम् ॥ ओं पर्ज्ज न्यायनमः २ ओं अद्भ्योनमः २ ओं पृथिव्यै नमः ३ त

टीका ।

अनतयैवप्राप्तौतथापितयोरुपादानमेषएवविधिर्य्यत्रक्वचि होमइत्यतिदेशप्राप्तस्वहोमेतिकर्तव्य •तान्तरस्यनिरा- साय अतएव त्यागोपिनिवर्त्तते ॥ वासुदेवहरिहरपद्ध त्यादिषुइदम्ब्रह्मणइत्यादीनि त्यागवाक्यान्यपिलिखि- तानिमैथिलाचारविरुद्धानि ॥ जलादौहोमपक्षे पर्य्यु क्षणमपिनास्ति ॥ अनुमतय इतीतिकारोहोमसमा प्तिज्ञापकः एवश्चानुमत्यन्ताः पञ्चाहुतीःस्वाहान्ताः । कुर्य्यात् ॥ प्रजापतिहोमोमनसाकार्य्यः प्रजापति म्मनसाध्यात्वा तूष्णीं होमेषुमर्व्वत्रेत्याश्वलायनवचनात् शूद्र त्वे ताश्चपिपञ्चाहुतयोनमोन्ताःकार्य्याःनमस्कारे णमर्व्वं न पञ्चयज्ञान्नहापये दितियाज्ञवल्क्यवचनात् शूद्राचारविवेकनाम्नियन्थे वाचस्पतिमिश्राणामयैवप्र योगः संक्षिप्तशूद्राह्निकेच ॥ भूतगृह्येभ्योमणिकेत्यौनि- ति ॥ अस्यैवविवरणंपर्ज्जन्यायाद्भ्यः पृथिव्यै इतिमणि कइत्यत्रसामीप्येलक्षणा उदपात्रसन्निधावित्यापस्तम्ब स्मृतेः मणिकउदपात्रम् अलञ्जरःस्यान्मणिकइत्यमरः इदम्प्राक्स्यमुदकस्यव्यैदियम् हार्य्ययोःहारदक्षिण

मूलम् ।

तःशाग्निनाऽग्निशालायांनिरग्निनागामालिख्यद्वारशा
खयोर्दक्षिणोत्तरयोः क्रमेण ओं धात्रेनमः ओं विधात्रे
नमः इतिद्वौबलीदेयौ ततश्चतसृषुदिक्षु ओं वायवेन-
मः ४ प्राच्यां ओं प्राच्यै दिशेनमः दक्षिणस्याम् ओं
अपाच्यै दिशेनमः पश्चिमायाम् ओं प्रतीच्यै दिशेनमः
उत्तरस्याम् ओं उदीच्यैदिशेनमः ॥ ततोगृहमध्येयथा

टीका ।

वामपार्श्वयोः । दिशाश्चेति अत्रचकारात्प्रणिदिशमित्य
नुकृष्यते अतश्चतसृषुदिक्षुदिग्भ्योबलीन्दद्यादित्यर्थः ॥ चतु
र्थ्यर्थेबहुलंच्छन्दसीतिसूत्रेणात्रचतुर्थ्यर्थेषष्ठी । य
त्तुदिशामितिश्रवणाद्दिग्भ्योनमइत्येवबलिचतुष्टयमिति
वासुदेवस्तन्नप्राच्यैदिशेस्वाहेत्यादि श्रुत्याश्रुतयुक्तविशेष
रूपेणैवदेवतात्वनिर्णयात्तदएवप्राच्यैनम इत्यादीन्यपि
रुद्रधरदेवनाथाद्युक्तानिवाक्यानिनिरस्तानि ॥ अत्रद
क्षिणदिग्बलिदानेदक्षिणायैदिशेनम इतिवाक्यंहरिहर
नीलकण्ठभट्टादयोलिखन्ति,दक्षिणायैदिशेस्वाहेतिश्रुतेः
वेदेदक्षिणदिग्वाचकत्वेनप्रायोदक्षिणाशब्दस्यैव प्रसिद्धे
रितितेषामाशयः प्रतिभाति तदस्मद्गुरवोनानुमन्यन्ते एतस्यवेद
मन्त्रत्वाभावात्कल्पित वाक्येऽश्रुतत्वस्सापत्त्यर्थ्यमङ्गस्या
युक्तत्वादेकस्याधात्रातेखरितः प्रयोगइतिन्यायाच्चकिन्तु

टीका ।

अपाच्यै दिशे नम इत्येव वाक्यम् ॥ एवमेव सर्व्वमैथिल निबन्धारः प्रयुञ्जते ॥ यत्त्वावाच्यै दिशे नम इति बहवः पठन्ति तत्प्रामादिकं माध्यन्दिनैशाखीय इ । विंशाध्याये प्राच्यै दिशे स्वाहेति यजुष्यधोदिक्पर्य्यायवाच्यै दिशे स्वाहेति मन्त्रदर्शनादवाच्यधोदिगिति . व्याडिसम्मतेश्च अतएव प्राच्यपाचीप्रतीच्यस्ताः .पूर्व्वदक्षिणपश्चिमादृत्य मरटीकायामपाचीशब्दं संसाध्यावाचीत्ययमपपाठएव अवपूर्व्वस्याञ्चतेरधोमुखीभावेवृत्तेरिति भानुदीक्षितो ऽवोचत् युक्तञ्चैतत् स्यादवाङ्ग्यधोमुखइत्यमरदर्शना- त् ॥ पृथूरुपर्य्यस्तवनमाततित्विषावानिलावूर्ज्जितसा लचन्दना । गजाधिपानामवरितः प्रसारिणीवनान्यवा ञ्चीवचकारसंहतिरितिभारविप्रयोगे । तस्मिन्नवाचे पालयितुः प्रजानामुत्पश्यतः सिंहनिपातमुग्रम् ॥ अ वाङ्मुखस्योपरिपुष्पवृष्टिः पपातविद्याधरहस्तमुक्ते ति कालिदासप्रयोगेचाधोदिगर्थस्यावाच्छब्दस्य दर्शनाच्च अवा ङ्मुखस्य अधोमुखस्ये तिरघुवंशटीकायांमल्लिनाथः कि ञ्च प्रागपागुदक्प्रतीचीर्यदितिपाणिनिसूत्रस्य मनोरमा यामप्यपाचीदक्षिणादिक्प्रतीचीपश्चिमा . पचारोमतुर गौडाः यदिन्द्रप्रागपागुदगित्यादौ मन्त्रे तथैवदर्शना दितिदीक्षितेनाप्युक्तम् किञ्च प्रागपागुदगधरामिति

मूलम् ।

पूर्व्वम् ओं ब्रह्मणेनमः ओं अन्तरिक्षायनमः ओं सूर्य्या यनमः एषामुत्तरतः ओं विश्वेभ्योदेवेभ्योनमः ओं विश्वेभ्योभूतेभ्योनमः इतिप्राक्संस्थम्बलिद्वयम् तयोर प्युत्तरतः ओं उषसेनमः ओं भूतानाम्पतयेनमः । इतिबलिद्वयमपिप्राक्संस्थ मेवयथोत्तरम्बलिचतुष्टयमि

टीका ।

माध्यन्दिनषष्ठाध्यायमन्त्रे प्यपाकृष्टःइत्यत्रदृश्यतेशब्दक ल्पद्रुमेपिदक्षिणादिग्वाचकत्वं न सर्व्वसम्मत्यापाचीशब्द एवलिखितोस्तिपाचीशब्दस्तुमतभेदेन एतदभिप्रत्यैव अपाच्यैदिशेनमइतमुख्य मवाच्यैदिशेनमइतिकेचि- दितिहैतपरिशिष्टे महामहोपाध्यायकेशवमिश्रपादाश्च व्यदधुः । एवञ्चावेत्यस्यमध्यार्थत्वम्मत्वाऽङ्कोमध्यऽस्त्र त्वयांसूर्य्यइत्यवराचीति वदन्तोयोपदेवचौरस्वामिप्रभृत योवभ्रमुरेव । अस्तुवालोकेऽवाचीशब्दोपि तथापिवेदा नुसारिभिरपाचीशब्द एवपठनीयो वेदेतथैवपाठनिर्ण यादार्य्यम्लेच्छाधिकरणसिद्धान्ताद्वाययायवमय श्रुत्व वतीत्यवयवपदेन सुप्रसिध्याम्लेच्छैः प्रियङ्गुणामेवोपादा नेप्राप्ते आर्य्यप्रसिद्धेर्ब्बलवत्त्वाद्दीर्घशूकानामेवग्रह णम्बाधितव्यदर्शनादिविरोधस्यसमाविप्रतिपत्तिःस्यादिति पूर्व्वपक्षोत्तरं सिद्धान्तसूत्रम् शास्त्रस्थावातन्निमित्तत्वा

मूलम् ।

निवाक्रमः ततः प्राचीनावीतीर्दक्षिणाभिमुखः पातित वामजानुः पितृतीर्थेन ब्रह्मादिबलेर्दक्षिणस्यान्दिसि ओं पितृभ्यः स्वधानमः इति पितृबलिन्दद्यात् ॥ ततोबलि शेषानुलिप्तभ्यावप्रक्षाल्यब्रह्मादिबलिभ्योवायव्याम् ।

टीका ।

दिति ॥ तदाहुर्भट्टचरणाः । अविप्लुतस्वशब्दार्थोयो वेदेषूपलभ्यते । तत्रत्यनिर्णयात्तस्मात्स्मार्त्तेऽपिभवतिनिर्णय इति ॥ शब्दार्थइत्यत्रार्थपदंशब्दस्याप्युपलक्षणम् न्याय साम्यात् एवञ्चयथायज्ञं म्लेच्छैरपिदीर्घशूकाएवोपादेया नकङ्गवस्तथात्रापि वैदिककर्मणिवेदानुसारिभिस्तत्प्र सिद्धोऽपाचीशब्दएवपठनीयो नावाचीशब्दः म्लेच्छाप-शब्दभाषित्वादितिबोध्यमित्युक्तम् ॥ मध्येचतत्त्वुद्दिष्टु दत्तानांबलीनामन्तराले । तेषाम्ब्रह्मादिबलीनाम् भुत्त रतः उत्तरप्रदेशेविश्वेभ्योदेवेभ्योनमःविश्वेभ्योभूतेभ्यो नमइतिद्वौबलीप्राक्संस्थौ । परंतयोरप्युत्तरतः उष-सेनमः भूतानाम्पतयेनम इतिप्राक्संस्थम्बलिद्वयन्द-द्यात् । एवमेवकर्कहरिहरवासुदेववाचस्पतिमिश्र केशवमिश्रादयः ठक्कुरदेवनाथश्रीदत्तरुद्रधरगणेश्वरो पाध्यायादिभिर्बलिचतुष्टयमुत्तरोत्तरक्रमेण, लिखि-तम् ॥ यद्यप्यत्राचारस्याविद्दविध्वस्तृश्यते तथापि

मूलम् ।

ओँ यक्ष्मैतत्ते निर्णेजनन्नमः इतिबलिविशेषान्नसहितञ्च-
नमुपवीतीदद्यात् ॥ ततोऽन्यदन्नमादायगृहाद्वहिः
ओँ देवामनुष्याः पशवोवयांसिसिद्धाः सयक्षोरगदैत्य

टीका ।

गृह्यसूत्रानुमार्थ्यादाएवपक्षः श्रेयानितिप्रतिभाति ॥
यच्चभूतानाम्पतयइत्यत्र चकारश्रवणान्नग्नं तमाहुस्तेऽ
स्मात्सम्प्रदायविरुद्धाः । अत्रविश्वेभ्योदेवेभ्योनम इ-
त्यादिनैकएवबलिः विश्वशब्दस्यसर्वनाम्नोवृत्ति स्थापित्व
त्व नसन्निहितदेवपदान्वयाद्विशिष्ट स्यैवदेवतात्वात्
यथात्वाष्ट्रम्पात्नीव तमालभेतेत्यत्र पात्नीवतशब्दस्यत्वा
ष्ट्रपदान्वयइति । एतेष्वेवानुक्तविशेषावलयोनमोन्ताः
कार्य्याः अमुष्मै नम इत्येवम्बलिदानविंधीयत इति
छन्दोगपरिशिष्टवचनात् ॥ पात्रम् अन्नपात्रम् निर्णि-
ज्यवारिणाप्रक्षाल्य । उत्तरापरस्यांवायव्याम्,उत्तरस्या
अपरस्याश्चदिशोऽन्तरालमित्यर्थः दिङ्नामान्यन्तरालइति
समासः निनयेत्, दद्यात् । इतिगृह्यार्थः ॥ अयंविधि
र्न्निरग्नेरपीतिप्रपञ्चयिष्यते ॥ . यक्ष्मबल्यनन्तरंविष्णु-
पुराणे । ततोऽन्यदन्नमादायभूमिभागशुचौपुनः दद्या
दशेषभूतेभ्यः स्वे च्छयासुसमाहितः ॥ देवामनुष्याइत्या
दिपञ्चश्लोकीमुक्त्वाइत्युच्चार्य्यनरोदद्यादन्नं श्रद्धासमन्वितः
भुविभूतोपकारायगृहीसर्व्वाश्रयोयतः ॥ इदम्बलिदान

## टीका ।

ग्रामर्थस्वेकयेतिग्रंवचात्सर्व्वशाखिसाधारणस्यसङ्कोचेमा
नाभावात्सर्व्वशाखाधिकरणन्यायाच्च ॥ चन्द्रस्तुचार्य्येति
इतिनापञ्चश्लोक्याएवकरणत्वम्प्रतीयते प्रत्येकमन्वयेऽ
चार्य्यंदद्यादितिपदयोरावृत्तिकल्पने वाक्यभेदापत्तेस्त
स्मात्पञ्चश्लोक्यैकएवबलिःचन्नन्दद्यादित्यवविधेयगतत्वं
नैकत्वसङ्ख्यायाविवक्षितत्वाच्च ॥ एवमेवाचारादर्शप्रदी
पचिन्तामणिप्रभृतयः । तथा । श्वचाण्डालविहङ्गाना
म्भुविदद्यात्ततोनरइति अत्रान्ये पिकतिपयेयाज्ञास्तथा
चमनुः ॥ शुनाञ्चपतितानाञ्चश्वपचाम्पापरोगिणाम्
वायसानाङ्कृमीणाञ्चशनकैर्न्निःक्षिपेद्भुवीति ॥ चाण्डा-
लश्वपचोर्भेदस्तुमनौ व्यक्तस्तथाहिशूद्राद्ब्राह्मण्याञ्जात
श्चाण्डालःक्षत्तृकन्यायाञ्जातःश्वपाकइति त्यागवाक्येश्व-

---

## मूलम् ।

सङ्गाः॥ प्रेताःपिशाचास्तरवः समस्तायेचान्नमिच्छन्तिमया
प्रदत्तम् ॥ १ ॥ पिपीडिकाकीटपतङ्गकाद्याबुभुक्षिताः
कर्म्मनिबन्धबद्धाः ॥ प्रयान्तुतेतृप्तिमिदम्मयान्नन्तेभ्यो
विसृष्टंसुखिनोभवन्तु ॥२॥ येषान्नमातानपितानबन्धु
र्नैवान्नसिद्धिर्न्नतथान्नमस्ति । तत्तृप्तयेऽन्नम्भुविदत्तमेत

## टीका ।

चण्डेभ्यइतिक्वचिद्दृश्यतेसचासङ्गतः मनुनाश्वभ्यःश्वपचेभ्य
श्चश्वभ्योपादानादतएवश्वपचेभ्योनम इत्येवप्रामाणिक
पुस्तकेपाठः ॥ आचारविवेकेशूलपाणिमहामहोपाध्या
यास्तुश्वपाकःश्वपचः श्वपगितिवचःपर्य्यायास्तवयथोप
देशंप्रयोगइति निर्णीयापिप्रयोगलेखनाऽवसरेश्वपचेभ्यो
नमइत्येवलिखितवन्तः मार्कण्डेयपुराणे श्वपचादीना
मितिपाठदर्शनात् श्वपचेभ्यइत्येवप्रयोज्यं श्वपचामिति
निर्देशस्त्वागमविधेरनित्यत्वान्नुड्भावेनार्षइत्येके इति
द्वैतनिर्णयप्रकाशेमधुसूदनमहामहोपाध्यायाः ॥ ततो
व्यासः । ऐन्द्रवारुणवायव्यायाम्यावैनैर्ऋतास्तथा ॥

---

## मूलम् ।

तेषान्तुदत्तमिदम्मुदिताभवन्तु ॥ ३ ॥ भूतानिसर्व्वाणि
तथान्नमेतदहञ्चविष्णुर्न्नयतोऽन्यदस्ति ॥ तस्मादहम्भू
तनिकायभूतमन्नम्प्रयच्छामिभवायतेषाम् ॥ ४ ॥ चतु
र्दशोभूतगणोयएष तत्रस्थितायेऽखिलभूतसङ्घाः ॥
तृप्त्यर्थमन्नंहिमयाविसृष्टन्तेषामिदन्तेमुदिताभवन्तु ५
इतिभूमौपञ्चभिःश्लोकैरेकमेवबलिन्दद्यात् ॥ ततः ओँ
श्वभ्योनमः ओँचाण्डालेभ्योनमः ओँ विहङ्गेभ्योनमः
ओँपतितेभ्योनमः ओँश्वपचेभ्योनमः ओँपापरोगिभ्यो
नमः ओँवायसेभ्योनमः ओँकृमिभ्योनमः इतिप्रत्येकं

मूलम् ।

ग्रनकैर्न्नि:क्षिपेत् ॥ ततः ओं ऐन्द्रवारुणवायव्यायाम्यावैनैर्ऋतास्तथा ॥ वायसाःप्रतिगृह्णन्तुभूमौपिण्डमयार्प्पितम् । इत्येकम्बलिन्दत्वा ओं श्वानौद्वौश्यावशवलौवैवस्वतकुलोद्भवौ । ताभ्यांपिण्डंप्रयच्छामिस्याताम्मेतावहिंसकौ । इत्यपरम्बलिन्दद्यात् ॥ सर्व्वा

टीका ।

वायसाःप्रतिगृह्णन्तु भूमौपिण्डमयार्प्पितम् ॥ श्वानौद्वौश्यावशवलौ वैवस्वतकुलोद्भवौ ॥ ताभ्याम्पिण्डम्प्रयच्छामि स्यातामेतामेतावहिंसकौ ॥ दत्वानेनविधानेन बलिम्पश्चादुपस्पृशेत् ॥ वायसबलिदानमन्त्रे वायव्याइत्येव पाठोयुक्तोनतुसौम्याइतिपौर्व्वमास्याम्मघायोगेवायसाःपञ्चर्ज्ज्विरे ॥ इन्द्राग्निवरुणवायुयोम्यमाद्यर्चानिर्ऋतेरित्यवयमात्काकोत्पत्ति श्रवणात्सोमस्यतदुत्पत्ति:क्वचिदप्यश्रवणाच्च पाञ्चरात्रयग्रहेऽपिवायव्याइत्येव पाठोदृश्यतेअतएवसर्व्वप्रामाणिकमैथिलनिबन्धानोयाज्ञ्यइत्येवैकवाक्यतयालिखन्तिस्म ॥ एतेनसौम्याइतिपाठ आह्निकतत्वाचारमयूखहरिहरपद्धतिकामधेनुपितृदयितादिधृतोपिहेयएवेतिदिक् ॥ अथ नित्यश्राद्धमितिइदमपिपितृयज्ञएवतथाचकात्यायन:श्राद्धंवापितृयज्ञः स्यात्पित्र्योबलिरथापिवेति ॥ श्राद्धं नित्यश्राद्धम् ॥ मनुः

दद्याद्धरह: श्राद्धमन्नाद्यैरोदकेनवा । पयोमूलफलै र्व्वापिपितृभ्य:प्रीतिमावहन् ॥ भविष्ये । नित्यश्राद्ध मदैवंस्याद्दक्षिणापिण्डवर्ज्जितमिति ॥ दक्षिणापिण्डा भ्याव्वर्ज्जितमित्यर्थ: श्राद्धविवेककृद्भवदेवोपाध्यायास्तुहत व्यंसमदक्षिणमितिवाक्याद्दक्षिणाया आवश्यकत्वं नोक्त वाक्यमन्यथाव्याचक्षते तथाहिनित्यश्राद्धमदैवंविश्वदेव रहितम्पिण्ड रहितस्तुकार्य्यं दक्षिणाचदेयेति एवञ्चा पावकेपिनित्यश्राद्धे दक्षिणादातव्यैव आह्निकतत्वश्राद्ध प्रकरणपितृभक्त्यादिष्वप्येवमेव ॥ स्मृतिसारे हरिनाथ महामहोपाध्यायास्तु सपावके नित्यश्राद्धे दक्षिणादानं लिखन्तिस्म ॥ मदनपारिजातेप्येवम् ॥ तन्मिमन्द क्षिणादानपक्षस्यहरोनानुमन्यन्ते दक्षिणापिण्डवर्ज्जित

मूलम् ।

न्वंलोनुपस्पृशेत् । अथ नित्यश्राद्धम् । ओं अपवित्र: पवित्रोवेतिमन्त्रेण पुण्डरीकाक्षंस्मृत्वा श्राद्धद्रव्याणि सिक्त्वा प्राङ्मुख:कुशत्रयतिलजलै: ओं अद्यमित्यश्राद्ध महङ्करिष्ये । इतिसङ्कल्प्य गायत्रीन्त्रिर्जपित्वा ओं देवताभ्यइतित्रिर्जपेत् । ततोऽपसव्यंकृत्वा पातित वामजानुर्दक्षिणाभिमुख: ओं अद्यामुकगोत्रपितरमुक शर्म्मन्निदमासनन्तेस्वधा इतिमोटक तिल जलैरासनं म्पित्रेदद्यात् । एवं पितामहादिभ्य: पञ्चभ्य: तत: ओं

## टीका ।

मितिनिषेधविशेषवाक्येसम्भवत्येकशाक्यत्वं वाक्यभेदे
नान्वयस्यमीमांसाविरुद्धत्वात् । इदमेवश्रीदत्तोपाध्याय
गणेश्वरोपाध्याय वाचस्पतिमिश्र शङ्करमिश्रादीनाम्म
तम् । आचारोप्येवम् । काशीखण्डे । नित्यश्राद्धम
दैवंस्यादर्घपिण्डविवर्जितम् ॥ दक्षिणारहितञ्चैतद्दा
तृभोक्तृव्रतोज्झितमिति । पिण्डनिषेधादेवावाहनाग्नौ
करणादिर्निवृत्तिः । नात्रभूस्वाम्यन्नदानमपिमहायज्ञा
न्तर्गतत्वाच्छ्राद्धत्वे नविधानाभावात् । अत्र सेक
सङ्कल्पजपासनतिलत्वपात्रोत्सर्गजपा आवश्यकाःपुष्प
चन्दनादिदानङ्काम्यमितरत्तुनास्त्येव । क्वचिन्निवर्ज्ये
ऽन्नहीनमितिपाठोपिदृश्यते । श्राद्धपल्लवे । नित्यश्राद्धं
कृत्वा नित्यदेवपूजादिनकार्य्यं श्राद्धान्तानिकर्म्माणीति
वचनादित्युक्तम् काम्यन्तुकर्त्तव्यमेव अतएवनित्यश्राद्धा
नन्तरमपिशिष्टानाङ्कूपतडागयागदेवप्रतिष्ठाद्यनुष्ठानन्न
विरुध्यते । पार्व्वणादिनेनित्यश्राद्धन्नकार्य्यमित्याहशूल
पाणिश्राद्धविवेकमदनपारिजातयोर्म्मार्कण्डेयपुराणम् ।
नित्यक्रियांपितॄणान्तुकेचिदिच्छन्तिसत्तमाः । नपितॄणा
न्तथैवान्येशेषंपूर्व्ववदाचरेदिति । नित्यक्रियां नित्य
श्राद्धम् । पितॄणांश्राद्धदिनेकेचिदिच्छन्तिकेचिन्नशेषंवैश्व
देवादिकंपूर्व्ववत्कुर्य्यात् । इयमत्रव्यवस्था । यत्रपार्व्वण

टीका ।

ह्निर्भिर्नित्यश्राद्धदेवताः षट्पुरुषाइष्टा भवन्ति न तत्र नित्य
श्राद्धं वक्ष्यमाणं तत्र निकैकोद्दिष्टादिषु तेनेष्टास्तं वकर्त्तव्य

---

मूलम् ।

अपहता इत्यादिना तिलान्विकीर्य्य ओं आयन्तु न इति
पठित्वा ओं अद्यामुकगोत्र पितरमुकशर्म्मन्नेतानि गन्ध
पुष्प धूपदीपताम्बूलानि ते स्वधा इति यथासम्भवं वस्त्रादि
दद्यात् । एवम्पितामहादिभ्यः । ततोऽन्नपात्रे गायत्र्या
चतुरस्रं मण्डलं कृत्वाऽन्नम्परिविष्य तत्र मधु दत्त्वा ओं
मधुवाता इति तृचम्पठित्वा पात्रमालभ्य ओं पृथिवी ते पात्र
मित्यादि ओं इदं विष्णुरित्यादि ओं कृष्ण कव्यमित्यादि
च पठित्वा ओं इदमन्नमित्यन्नं इमा आप इत्यम्बु इदमाज्य
मिति घृतं इदं हविरिति पुनरन्नं चाङ्गुष्ठन्निवेश्य ओं अप
हता इत्यादिना तिलान्विकीर्य्य ओं अद्यामुकगोत्रपितर
मुकशर्म्मन्निदमन्नं सतिलन्ते स्वधा इति मोटकादिभिः
पित्रेऽन्नन्दत्त्वा पितामहादिभ्यः पञ्चभ्यो दद्यात् । ओं
देवताभ्य इति त्रिर्जपित्वा ओं प्रमादात्कुर्व्वतां कर्म्मेति
च पठित्वा तदन्नम्ब्राह्मणाय प्रतिपादयेदिति ततः ओं
इदमन्नममनुष्येभ्यो हन्त इति कुशयवतिलजलैः प्राजापत्य
तीर्थेन भिक्षोरुदङ्मुखो मनुष्यानुद्दिश्य किञ्चिदन्नन्दद्यात्

टीका।

मिति। तथाच। चमत्कारखण्डे। नित्यश्राद्धन्तुकुर्व्वी तप्रसङ्गाद्यवश्विदाति। श्राद्धान्तरेकृतेऽन्यचनित्यत्वाच्च प्रदापयेदिति। वैश्वदेवादिकमपिपार्व्वणोत्तरमेवकर्त्त व्यं वैश्वदेवन्ततःकुर्य्यान्निहत्ते श्राद्धकर्म्मणीतिवचनात् पितृन्सन्तर्प्य विधिवद्बलिन्दद्याद्विधानतः। वैश्वदेवन्त तःकुर्य्यात्पश्चाद्ब्राह्मण तर्पणमितिवचनाच्च। एतन्न शाखावाहच्छन्दोगपरिशिष्ट। चप्यु दृत्ययथाशक्तिकिञ्चि दन्नय्यथाविधि। पितृभ्योऽथमनुष्येभ्योदद्यादहरहर्द्विजः। पितृभ्यइदमित्युक्तास्वधाकारमुदीरयेत्। हन्ताकारंम नुष्येभ्यस्तदन्तेनिनयेदपइति। एवञ्च ओं इदमन्नं पितृभ्यःस्वधा इतिलघुं नित्यश्राद्धप्रयोगम्बहवश्वाचरन्ति अपरेतु पितरोदेवताइत्यादौ पितृपितामहत्यादिना पृथगेवत्यागोद्दिश्यत्वरूपदेवतात्वस्यसर्व्वेर्न्निर्णयान्मिलित देवतात्वपक्षस्यश्राद्धकल्पादि प्रामाणिकनिबन्धेषुखण्ड नादमुकामुकगोत्रेत्तुभ्यमन्नं स्वधा नम इतिवचनवि रोधाच्चोक्तलघुनित्यश्राद्धप्रयोगोऽप्रामाणिकएव ततश्च ओं अमुकगोत्राःपितृपितामहप्रपितामहाअमुकामुका मुकशर्म्माणोऽमुकगोत्रामातामहप्रमातामहवृद्धप्रमाता महाअमुकामुकामुकशर्म्माणइदमन्नम्वः स्वधा इत्येवसत्रु र्व्विं शश्राद्धप्रयोगोयुक्तइतिवदन्ति आचारस्तुभयथाद्रष्टव्यो

ततो मनुष्ययज्ञमाह । इदमन्नमितिनमःस्वस्तीतिसूत्रे वषट्शब्दस्योपलक्षणत्वाद्धन्तशब्दयोरपिमनुष्येभ्यइत्यत्र चतुर्थीगोकुलनाथोपाध्यायादयोप्येवम् । पारस्करः । उद्धृत्याग्रमन्नाद्ब्राह्मणायावनेनिज्यदद्याद्धन्ततइति । यदिसाक्षाद्ब्राह्मणायान्नन्दीयते तदाइदमन्नम्मनुष्यायहन्ततेइति वाक्यङ्कार्य्यन्तदभावे मूलोक्तरीत्या । केचित्त्वत्रमनुष्य पदेनसनकादीनामेवग्रहणं तर्पणेतथा निर्णयादतएव इदमन्नं सनकादिमनुष्येभ्योहन्तेतिवाक्यम्बहवःप्रयुञ्जत इतिवदन्ति । यद्यपी दर्य्यौन्नमवस्यनन्तरमेवपारस्करे णोक्तन्तथापिकाम्यबलिदानानन्तरमेवकार्य्यंनैकस्मिन्क र्म्मणितिकर्म्मान्यत्क्रियतेयत इतिछन्दोगपरिशिष्टात् एवं नित्यश्राद्धाधिकारिणापितदनन्तरमेवकार्य्यं पितृ-

मूलम् ।

ततो यतिभिर्ब्रह्मचारिणेचोपस्थिताय भिक्षान्दद्यात् । अथ गोग्रासदानम् । सौरभेय्यःसर्व्वहिताःपवित्राः पुण्यराशयः । प्रतिगृह्णन्तुमेग्रासङ्गावस्त्रैलोक्यमातरः इतिमन्त्रेणसान्नंग्रासमुष्टिंपरस्यगवेदद्यात् । इतिगोग्रासदानान्तप्रयोगाः ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥

टीका ।

शेषमनुष्येभ्योदद्यादहरहरित्यनुक्रमविधायकछन्दोगपरिशिष्टात् भिक्षामिति । विष्णुपुराणे । दद्या

टीका ।

अभिक्षान्नियं परिव्राड्ब्रह्मचारिणाम् । रवेक्रयाचक्षुषो दृष्ट्यादिभवेसत्यचारितम् । तथा । व्याधितस्यान्नहीनस्य कुटुम्बात्प्रच्युतस्य च । अध्वानं वा प्रपन्नस्य भिक्षाचर्य्या विधीयत इति । यमः ॥ हस्तदत्तास्तु या भिक्षा सलिलं व्यञ्जनानि च । भोक्तात्वशुचितां याति दाता स्वर्गं न गच्छतीति । एतावता ग्रन्थेन वाजसनेयिनां स्नानादि

मूलम् ।

अथ छन्दोगानां नरसिंहपुराणीयस्नानविधिः । शुचौ देशे कुशमृत्तिलानभ्युच्य संस्थाप्य मृत्तोयेन देहं प्रक्षाल्य स्नानशाटीं संशोध्य द्विराचम्य शनैर्जलं प्रविश्य वरुणमप्प तिन्नत्वा हरिं बुद्ध्या स्मरन् स्रोतसि स्रोतोभिमुखस्तडागादौ सूर्याभिमुखः शरवत्तीरां प्लवेत् ततस्तीरं समासाद्याचम्य ओं उपास्मै गायता नरः पवमानायेन्दवे । अभि देवाँ २॥ इयक्षते । ओं अभितमधंनापयोऽथर्व्वाण॥

टीका ।

कर्मान्युक्त्वाऽधुना छन्दोगानां तानि प्रक्रमते अथ छन्दोगानामिति ॥ आधुनिकैश्छन्दोगैः प्रायेण नरसिंहपुराणीयस्नानविधेरेवानुष्ठानात्प्रथमं तमेवाह नरसिंहपुराणीयस्नानविधिरिति ॥ नरसिंहपुराणम् ॥ विधिं स्नानस्य वक्ष्यामि समासात्पापनाशनम् । स्नात्वा येन

विधानेन मद्योमुच्येत किल्बिषात् ॥ स्नानार्थं मृदमानीय शुद्धाक्षतकुशतिलैः सह । सुमनाश्च ततो गच्छेत् नदीं शुद्धां मनोरमाम् ॥ नद्यां तु विद्यमानायां न स्नायादन्यवारिणि । न स्नायादल्पतोयेषु विद्यमाने बहूदके ॥ नद्यां सत्यन्यां स्नायान्न प्रतिस्रोतो द्विजोत्तमः । तडागादिषु तोयेषु प्रत्यक् स्नानमाचरेत् ॥ शुचौ देशे समभ्युक्ष्य स्थापयेत्कुशमृत्तिकाम् । मृत्तोयेन स्वकं देहं बहिः प्रक्षाल्य यत्नतः ॥ स्नानशाटीं च संशोध्य कुर्यादाचमनं बुधः ।

मूलम् ।

अग्निर्युः । देवन्देवायदेवयुः ॥ ओं मनःपवस्वशङ्कवे शङ्खनायशमर्व्वते । शंराजन्नोषधीभ्यः ॥ इतितृचेन कुशाग्रस्थतोयेनात्मानमभ्युक्ष्य मृदमादाय ओं इदंविष्णुर्व्विचक्रमे त्रेधानिदधेपदम् ॥ समूढमस्यपांसुले ॥ ओं त्रीणिपदाविचक्रमेविष्णुर्गोपाअदाभ्यः ॥ अतोधर्माणिधारयन् ॥ ओंविष्णोःकर्म्माणिपश्यतयतोव्रतानि पस्पशे ॥ इन्द्रस्ययुज्यःसखा ॥ इतितृचेनमृदागात्रमालभ्यनारायणन्देवंस्मरञ्जलंप्रविशेत् । ततः ऋतञ्च सत्यमित्यघमर्षणस्याघमर्षणऋषिरनुष्टुप्छन्दो भाववृत्तो देवता

टीका ।

मग्नेर्जलं प्रविश्याथ नमेदकृष्णमर्पितम् । हरिमेव स्मरन्बुद्ध्यानिमज्जेच्च वारिणि ॥ ततस्तीरं समासाद्य अपः आचम्य

यवतः ॥ चमयेद्दक्षान्देवन्तैर्मन्त्रैः पावमानिभिः । कुशाग्रस्थेन तोयेन प्रोक्ष्यात्मानं प्रयवतः ॥ आलभेन्मृत्तिकाङ्गानि इदं विष्णुरिति द्विजः ॥ ततो नारायणं देवं संस्मरन्प्रविशेज्जलम् ॥ निमज्यान्तर्जले सम्यक् पठेदघमर्षणमिति ॥ मन्त्रत इति ॥ गायत्रीमन्त्रं चसावित्रानुमन्त्रितं

मूलम् ।

ऽघमर्षणावभृथे विनियोगः ॥ ओं ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत ततः समुद्रो अर्णवः समुद्रादर्णवादधिसंवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी । सूर्य्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् । दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः ॥ इति जले निमग्नस्त्रिर्जपेत ॥ इति नरसिंहपुराणीय स्नानविधिः ॥ अथ वेदपारगाणां छन्दोगानाङ्गोभिलीय स्नानविधिः ॥ तत्र प्रथमम् ओं पावकानः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः । इति मन्त्रं च तीर्थं नमस्कुर्य्यात् ततः पूर्व्वस्यापितस्तृभागेन पादाग्रारभ्य नाभिपर्य्यन्तं वामहस्तेन वतिष्प्रक्षाल्यापरतृभागेन दक्षिण हस्तेन शिरः सकृत्प्रक्षाल्य तृतीयतृभागेन दक्षिणहस्तेनैव नाभिकण्ठ कण्ठादधो द्विः प्रक्षालयेत् । ततो द्विराचम्य बद्ध

मूलम् ।

शिखो यज्ञोपवीती प्राङ्मुख उदङ्मुखो वा कुशहस्तः समाहि

तः ओंभूः ओंभुवः ओंस्वः ओंमहः ओंजनः ओंतपः ओंसत्यम् ओंतत्सवितुर्व्वरेण्यम्भर्गोदेवस्यधीमहिधियो योनःप्रचोदयात् ॥ इतिसंजप्यपित्वामप्रकृत्यैःसावित्रा नुमन्त्रितमुदकंसकृदाचम्य यथाविध्याचामेत ॥ ततो

टीका ।

सकृदुदकमाचामेदितिगोभिलैकवाक्यतानुरोधात् ॥ पावमानिभिरितिवक्ष्यमाणयुक्ताःपावमानीपदेनोपासे गायतेयादिक्त्रयपरिग्रहइति ॥ गोभिलीयस्नानमन्त्रे धियावसुरिति । अतक्वचित्पुस्तकेधियावस्वितिपाठः ॥ गुणविष्णुभाष्येपि पुस्तकभेदेन पाठभेदोव्याख्याभेदश्च दृश्यते । यथासरस्वतीनदीपावकापावनीवाजिनीवती वाजोन्नंतत्कारणतयांवाजिनीपृथ्वीतद्वतीनोऽस्माकंयज्ञं वष्टुवष्टुयाजिभिः साधनैः बाजाअन्नानिअन्नं नचान्नका रणभूतास्तदआप्यश्चलक्ष्यन्ते । धियावसुरिति । धीगन्दः

मूलम् ।

भिमतदेवतांस्मृत्वा ओंसहस्रशीर्षापुरुषःसहस्राक्षःसह स्रपात् । सभूमिंसर्व्वतोवृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ ओं घृतवतीभुवनानामभिश्रियोर्व्वीपृथ्वीमधुदुघेसुपेशसा । द्यावापृथिवीवरुणस्यधर्म्मणाविष्कभितेअजरेभूरिरेतसा ओं अश्वक्रान्तेरथक्रान्तेविष्णुक्रान्तेवसुन्धरे । मृत्तिके त्वाञ्चगृह्णामिप्रजयाचधनेनच ॥ इत्याभिर्ऋग्भिर्मृत्ति

कामादाय । ओं इदंविष्णुर्व्विचक्रमेत्रेधानिदधेपदम् समूढ़मस्यपांसुले ॥ ओं त्रीणिपदाविचक्रमेविष्णुर्गो पाअदाभ्यः । अतोधर्म्माणिधारयन् । ओंविष्णोःकर्म्मा णिपश्यतयतोव्रतानिपस्पशे । इन्द्रस्ययुज्यःसखा । ओं तद्विष्णोःपरमम्पदंसदापश्यन्तिसूरयः । दिवीवचक्षुरा ततम् । ओंतद्विप्रासोविपन्यवोजागृवांसःसमिन्धते । विष्णोर्य्यत्परमम्पदम् ओंअतोदेवाअवन्तुनोयतोविष्णु र्व्विचक्रमे । पृथिव्याअधिसानवि । इतिषड्ऋचेनतां मृदंसम्मृज्य ओंउद्वयन्तमसस्परिज्योतिःपश्यन्तउत्तरम् स्वःपश्यन्त उत्तरम् देवन्देवत्रासूर्य्यमगन्मज्योतिरुत्तमम्। ओं उदुत्तमव्वँरुणपाशमस्मदवाधमव्विँमध्यमंश्रथाय । अथादित्यव्रतेवयन्तवानागसोऽदितयेस्याम । इत्येता भ्यान्तयामृदाउर्द्ध्वींपाणींप्रतिलिप्य आदित्यमवेक्षेत । ततः ओंउद्धृतासिवराहेणकृष्णेनशतबाहुना । मृत्ति- केहरमेपापय्यँन्मयादुष्कृतङ्कृतम् ॥ आरुह्यममगात्रा णिसर्व्वंपापम्प्रमोचय । ओं अमोसिप्राणतदृतम्ब्रवी म्यमासिसर्व्वमनुप्रविष्टः सामजरांरोगमपमृज्यशरी रात्पामएधिमामृथानइन्द्र ॥ इत्याभ्यान्तयामृदापा

---

टीका ।

कर्म्मवचनःसारस्वतमन्त्राभ्यामेन कर्म्मणासङ्घसतीति तथोच्यते । वमुरितिवसेरोणादिकउरिति । वखिति

पाठवस्त्र वमुधनस्य धियान्तःकरणेन बहुकामयताम् शेषं प्राक्तन्। मामवेः संहितायान्तु धियाक्समुः इति सविसर्गं तत्रपाठो दृश्यते स्पष्टं, इंषामर्त्यं सर्वतोऽस्त्वं ति। वत्वापरि वार्य्यं त्वर्गगुणत्रिषु नाव्याख्यातः माध्यन्दिनीयपुरुष

मूलम्।

पादावारभ्य शिरःपर्य्यन्तान्यङ्गान्यनुलिम्पेत् ततः पुनर-नेनैव विधिना मृदानाद्यङ्गाभिमर्शनान्तं कृत्वा ओं गात्र यिष्ठाममन्यवः सजात्येन मरुतः सबन्धवः। रिहते ककुभो मिथः। इत्यनेन पादावारभ्य शिरःपर्य्यन्तान्यङ्गानि गोमयेनाभिमृशेत् ततः ओं ऋतञ्च सत्यञ्चाभीद्धात्तप सोऽध्यजायत ततो रात्र्यजायत ततः समुद्रोऽअर्णवः समुद्रादर्णवादधि। संवत्सरो अजायत अहोरात्राणि विदधद्विश्वस्य मिषतो वशी सूर्य्याचन्द्र मसौ धाता यथा पूर्व्वमकल्पयत् दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः॥ इति तीरे निर्व्वपेत्। ततोऽभिमतदेवतां स्मृत्वा नाभि मात्रं जलं प्रविशेत् ततो वक्ष्यमाणचतुरृग्भिः पवित्रेण शिरसि जलं क्षिपेत् ओं शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये। शंय्योरभिस्रवन्तु नः। ओं आपो हिष्ठा मयोभुवस्तान ऊर्ज्जे दधातन। महे रणाय चक्षसे॥ ओं यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मा-तरः। ओं तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ॥

षाशेजनयथाचन: ओं उत्तास्मैगायतानर:पवमानायेन्दवे । अभिदेवँर ॥ इयक्षते ॥ ओं अ म्रुतेमधुनापयोश्व्वाचोषभिश्रयु: । देवन्देवायदेवयु: । ओं सन:पवस्वगङ्गवेजनायजमर्व्वते । शंराजन्नोषधीभ्य: ॥ ओं तरत्समन्दीधावतिधारासुतस्यान्धस: । तरत्समन्दी धावति ॥ ओं उस्राविद्वसूनामर्त्यस्यदेव्यवस: ॥ तरत्समन्दीधावति ॥ ओं ध्वस्रयो:पुरुषन्त्योरासहस्राणिदद्महे । तरत्समन्दीधावति ॥ ओं आययोस्त्रिंशत मनासहस्राणिचदद्महे । तरत्समन्दीधावति ॥ ओं एतोन्विन्द्रं स्तवामशुद्धं शुद्धं नसामाशुद्ध रुक्थैर्व्वावृधांसं

टीका ।

मूर्ता तुपूर्त्वं तिपाठ: ॥ विष्णुर्गोपाइति । यद्यप्यस्मिन्मन्त्रे क्वचित्पुस्तके विष्णोर्गोपाइतिपाठ:एवमपिममन्त्रे पश्यपीइत्यत्रपश्यसेइतिपाठ: गुणविष्णुभाष्ये विपुस्तकभेदेनपाठभेदोव्याख्याभेदश्चदृश्यते तथापिप्रामाणिकाह्निकपुस्तकानुसारीसामवेदसंहितानुसारीचमूलोक्त:पाठ:

मूलम् ।

शुद्ध राशीर्वान्ममत्तु । ओं तमुष्टवामयक्षिरद्भन्द्रमु क्षाणिन्नावृधः । पुरुव्ययस्यपौंस्या सिषासन्तोवनामहे । ओं नकिरिन्द्रत्वदुत्तरं नज्यायो अस्तिवृत्रहन् । नकी

वर्य्यैथात्वम् । ततोवक्ष्यमाणविधिनाप्राणायामवयं कृत्वासहस्रशीर्षेत्यादिकस्य स्यपुरुषऋषिरनुष्टुप्छन्दो विष्णुर्देवता ऽघमर्षणेविनियोगः ओंसहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् । सभूमिंसर्व्वतोवृत्वाऽत्यतिष्ठद्दशाङ्गुलम् । ओं त्रिपादूर्द्ध्वउदैत्पुरुषःपादोऽस्येहाभवत्पुनः ततोविष्वङ्व्यक्रामत्साशनानशनेअभि । ओं

टीका ।

पवित्रेणशिरसिजलंक्षिपेदिति । गोभिलः । नाभिमात्रे जलेस्थित्वाशन्नोदेव्यापोहिष्ठीयाभिः पावमानीभिस्तरत्समन्दीभिरतोन्विन्द्रन्तमुष्टवामनकिरिन्द्रत्वदुत्तरमित्याभिरृग्भिःपवित्रवतीभिर्मार्ज्जयेदिति । पवित्रवतीभिः कुशपवित्रयुक्ताभिः सूत्रोक्तचतुर्दशऋग्भिर्जलेनशिरसि

मूलम् ।

पुरुषएवेदंसर्व्वंयद्भूतय्यँच्चभाव्यम् । पादोऽस्यविश्वाभूतानि त्रिपादस्यामृतन्दिवि । इत्यन्तञ्जलेजपेत् । ततोमौनीस्रोतसिस्रोतोऽभिमुखस्तडागादौचसूर्य्याभिमुखः शरवत्विराभवेत् । ततोद्विराचम्यपुनः शन्नो देव्यादिभिःपूर्व्ववच्छिरसिजलंक्षिपेत् । इतिगोभिलो यस्नानविधिः । अथछन्दोगानांसन्ध्यावन्दनम्

टीका ।

मार्ज्जनङ्कार्य्यमित्यर्थः एतेनपवित्रवतीभिरित्यनेनपवि

मूलम् ।

ऐशान्याभिमुखोभूत्वा द्विराचम्यगायत्रीमन्त्रेण शिखा
म्बद्धावामेपाणौबहूनकुशान्दक्षिणेऽनामिकाप्रथमपर्वणि
पवित्रन्धृत्वापुनराचम्य अघमर्षणसूक्तस्याघमर्षणऋषि
रनुष्टुप्छन्दो भाववृत्तोदेवताऽश्वमेधावभृथेविनियोगः

टीका ।

अन्तेचित्तमित्यादीनां पवित्रपदवतीनामृचाञ्चयमि
तिमतंप्रत्युक्तम् । एवंमार्ज्जनात्प्राक्प्रपद्ये वरुणमित्या
दिनातीर्थावाहनमप्ययुक्तम् तस्यगङ्गास्नानकल्पप्रविष्ट
स्यात्रसम्बन्धाभावादसम्बद्धव्यवायापत्तेर्गोभिलीयक्रम
विरोधाच्च । अत्रपावमानीपदंपवमानसम्बन्धिऋक्परं
बहुवचनन्तुकपिञ्जलाधिकरणन्यायात्रित्वपर्य्यवसितंता
स्वपिकाण्डादिपठितानामेवतिसृणामुपादानंकपालाधि
करणन्यायात्तेन उपास्मैगायतेत्यादिऋक्त्रयपरिग्रहः
केचित्तुपावमानोपदेनयः पावमानीरित्यादिकाः पाव
मानीपदयुक्ताःषडृचःपरिगृह्णन्तेअतएवगुणविष्णुभाष्ये
प्यस्मिन्नवसरेताएवऋचोव्याख्याताइत्याहुस्तन्नलक्षणा
पत्तेः अतएवसमुच्चयपक्षोऽपिनयुक्तः तरत्समन्दीभिरिति
ऋक्चतुष्टयस्यग्रहणंगोतमादि स्मृतिषुतावतएवपावन
त्वेनकीर्त्तनादिति । नकिर्दृन्द्रे ति अस्मिन्मन्त्रे नकया
मेस्तिइवदन्निति क्वचित्पाठः ॥ छन्दोगानांसध्यावन्दन

मूलम् ।

ओं ऋतञ्चसत्यञ्चाभीद्धात्तपसोऽध्यजायत ततोरात्र्यजा।
यत ततःसमुद्रोअर्णवः समुद्रादर्णवादधिसम्बत्सरोअ
जायत अहोरात्राणिविदधद्विश्वस्य मिषतोवशी सूर्य्या
चन्द्रमसौधातायथापूर्व्वमकल्पयत् दिवञ्चपृथिवीञ्चान्त
रिक्षमथोस्वः इतिजलमभिमन्त्र्याघ्रामेत्ततोहृदयंनाभिं

टीका ।

मिति ॥ तत्रसाधारणविषयात्राजसनेयिसन्ध्याप्रकरण
एवद्रष्टव्याः विशेषास्तुवक्ष्यन्ते ॥ तत्रछन्दोगानाञ्जल
सन्ध्यावन्दनञ्चस्यैवमुख्यत्वादुपस्थानपर्य्यन्तांसन्ध्यांपि
तृतर्प्पणञ्चजलेकृत्वोत्तीर्य्यधौतेवाससीपरिधाय गायत्री
जपोत्रायञ्चत्रयस्थलेकार्य्यः । शीतालुतयावातूलतया
वास्थलेसन्ध्यावन्दनेप्ययमेवक्रमसमाद्रियन्तेसामगाः तर्प्प
णानधिकारिणस्तुसन्ध्यावन्दनानन्तरमेवगायत्रीजपमा
चरन्तीतिबोध्यम् । छन्दोगानामघमर्षणसूक्तप्राणाया
मयोरेवस्मृत्यादिस्मरणन्नान्यत्रअविधानात् तयोस्तुअवि
दित्वातुयःकुर्य्याद्याजनाध्यापनञ्जपम् । होममन्तर्जला
दीनितस्यचाल्पफलम्भवेदितियाज्ञवल्क्यवचनं यद्वाऽऽ
सनंनियम्यासूत्स्मृत्वाचर्य्यादिकन्ततः । सन्निमीलित
दृङ्मौनीप्राणायामान्समभ्यसे दितिबृहस्पतिवचनञ्चप्र
माणम् ॥ एतान्सर्व्वान्दीनिजलमध्ये क्रियमाणान्यघंम

मूलम् ।

स्कन्धौ चस्पृशेत् ततः ओं आपो मामभिरक्षन्तु इति वारि णात्मरक्षां कृत्वा ओङ्कारस्य ब्रह्मर्षिर्गायत्रीछन्दोऽग्नि र्देवता शुक्लोवर्णः सर्व्वकर्म्मारम्भे विनियोगः ॥ सप्तव्या हृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुब्वृहतीपंक्ति त्रिष्टुब्जगत्यश्छन्दांस्यग्निवाय्वादित्यवृहस्पतिवरुणेन्द्रविश्वे देवादेवताः प्राणायामेविनियोगः, गायत्र्याविश्वामित्र ऋषिर्गायत्रीछन्दः सवितादेवता प्राणायामेविनि योगः, शिरसः प्रजापतिर्ऋषिर्ब्रह्माग्निवायुसूर्य्यादेवताः प्राणायामेविनियोगः इत्यृष्यादिकंस्मृत्वा दीर्घघण्टानि नादवत्तिमानिकंप्रणवमुच्चार्याङ्गुष्ठेन नासादक्षिणपुट न्निरुध्य वामनासापुटेन शनैर्वायुमाकृष्य सर्वनाड़ीः पूरयन्नाभौचतुर्भुजन्नीलोत्पलदलश्यामं विष्णुंध्यायन्नौ

---

टीका ।

र्घणादीनीति याज्ञवल्क्यव्याख्यातारः श्रीदत्तोपाध्याय हरिनाथोपाध्यायादयोप्येवम् ॥ यद्यपिगोभिलव्याख्या यनाभ्यामेतावदघमर्षणसूक्तन्नोक्तन्तथापि कामधेनुस ग्रहोहीतानुसारात्सकलमैथिलसामगाचाराच्चतदादौ युक्तमेवेत्याह अघमर्षणसूक्तस्येति । वाजसनेयिसाह चर्य्यादयमत्रच्छन्दोगैरपिवक्तव्य इति एवपठतितेनतेत्ति रीयशाखीयः ॥ प्राणायामादिगायत्रीजपान्तसन्ध्या

मूलम् ।

नेत्रनिमीलिताक्षः ओंभूः ओंभुवः ओंस्वः ओंमहः ओं जनः ओंतपः ओंसत्यम् ओंतत्सवितुर्वरेण्यंभर्गोदेवस्य धीमहि । धियोयोनःप्रचोदयात् ओं आपोज्योतीरसो ऽमृतंब्रह्म भूर्भुवःस्वरों इतिविःपठित्वा पूरकाख्यप्रा णायामंकुर्यात् . ततोऽङ्गुष्ठानामिकाभ्यां नासापुटद्वयं दृढं निरुध्यश्वासमत्यजन् हृदिकमलासनंब्रह्माणं रक्त वर्णंचतुर्भुजंध्यायन्पूर्वोक्तमन्त्रं त्रिर्जपेदितिकुम्भकाख्यः प्राणायामः ततो दृढनिरुद्धवामनासापुटःशनैर्दक्षिण नासापुटेन वायुंत्यजन् ललाटे शुद्धस्फटिकसंकाशंत्रिने त्रंशिवंध्यायन्पूर्वोक्तमन्त्रं त्रिर्जपेदितिरेचकाख्यः प्राणा यामः तत आचम्य कुशत्रयंगृहीत्वा ओं इत्येकम् ,

टीका ।

पासनविधिमाहगोभिलः । अथातःसन्ध्योपासनविधिं व्याख्यास्यामःसुप्रक्षालितपाणिपादवदनउपविश्योपस्पृ श्यप्रागग्रेषुदर्भेषुप्राङ्मुखउदङ्मुखोवायज्ञोपवीती ततो भूर्भुवःस्वर्महर्जनस्तपःसत्यमितिसप्तव्याहृतयः प्रतिप्र णवाद्यागायत्र्यापोज्योती रसोऽमृतम्ब्रह्मभूर्भुवःस्वरोमि तिशिरोदशप्रणवसप्युक्तं स्थिरभ्यस्तपूरककुम्भकरेचका ख्यप्राणायामएवंत्रीन्कृत्वासप्रणवषोडशवाचामेत् ॥ ततो मार्जनंप्रणवेनव्याहृतिभिस्तिसृभिरथगायत्र्यापो

मूलम्।

भूर्भुवः स्वरित्यपरम्, तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि धियोयोनःप्रचोदयात् इतिहतोयम् ओं आपोहिष्ठा मयोभुवस्तानऊर्जेदधातन। महेरणायचक्षसे॥ योवः शिवतमोरसस्तस्यभाजयतेहनः। उशतीरिवमातरः॥ तस्माअरङ्गमामवोयस्यक्षयायजिन्वथ। आपोजनयथा चनः॥ इतिऋचैवचतुर्थमार्जनंशिरसिजलेनकुर्यात् ततः करेणनासिकायांजलंसंयोज्यायतासुरनायतासु वांवितःम सकृद्वाऽघमर्षणसूक्तंजपेत् अघमर्षणसूक्तस्था

टीका।

इद्देतितिसृभिर्ऋग्भिरथोदकंहस्तेकृत्वा ततनासिका माघायायतासुरनायता मुच्छ्वासकृत्त्रिर्वाजपेद्दतसत्य ञ्चेतिविरुद्धकाञ्जलिमादित्यंक्षिपेत्साविवोपस्थानमुद् त्यञ्चित्रमित्यथ ध्यायन्युक्तमावर्तयेदोम्पूर्वांगायत्रीमष्ट कृत्व एकादशकृत्वोद्वादशकृत्वः पञ्चदशकृत्वःशतकृत्वः सहस्रकृत्वश्चेति॥ तथामध्याह्नसन्ध्यासूर्योपस्थानेभे भिन्नः॥ अथ नित्यवत्सन्ध्यामुपासीतोदुत्यञ्चित्रमा यस्त्रोरपत्येतायवस्तरभिरुद्धामेषोत्यादिभिर्ऋग्भिःसवितु रुपस्थानमिति॥ तत आचम्येति॥ योगियाज्ञवल्क्यः प्राणस्यायमनंकृत्वा आचामेत्प्रयतोऽपिसन्। आकाश स्थितयस्मात्तस्मादाचमनंस्मृतमिति॥ इतर्निर्देश।

मूलम् ।

ऋतञ्चेत्यस्याघमर्षण ऋषिरनुष्टुप्छन्दो भाववृत्तो देवताऽश्वमेधावभृथे विनियोगः ओं ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत ततो रात्र्यजायत ततः समुद्रो अर्णवः समुद्रादर्णवादधि संवत्सरो अजायत । अहोरात्राणि विदधद्विश्वस्य मिषतो वशी । सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः ॥ ततः ओं अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः । त्वं यज्ञस्त्वं वषट्कार आपो

टीका ।

अघमर्षणे प्राणायामे आचमनं कार्यम् यदस्याह्निकतत्त्वे सायमग्निश्चेत्युक्त्वा प्रातः सूर्यश्चेत्यपः पिबेत् । आपः पुनन्तु मध्याह्ने ततश्चाचमनञ्चरेदिति भरद्वाजवचनात् समन्त्रकमाचमनं रघुनन्दनो लिखति स्म तद्युक्तं गोभिलेनामन्त्रकाचमनस्यैव विधानात् भरद्वाजमैत्रायणीयगृह्यपरिशिष्टादिवचनानि तु शाखान्तरविषयाणीति ॥ यदप्याह्निकतत्त्वमदनपारिजातयोर्बौधायनवचनं समन्त्राचमने प्रमाणमुपन्यस्तं तदप्यसत् सन्ध्याप्रातःकालिकप्रोक्षणात् प्रागेवाग्निश्चेत्यादिमन्त्राणामाचमने विनियोगात् तथा च बौधायनः ॥ अथातः सन्ध्योपासनविधिं व्याख्यास्यामः तीर्थं गत्वा प्रयतोऽभिषिक्तः प्रक्षालितपाणिपादोऽप आचम्याग्निश्चमामन्युश्चेति सायमपः पीत्वा सूर्यश्च मामन्यु

मूलम् ।

ज्योतीरसोऽमृतम् ॥ इतिमन्त्रं वाचम्योत्थायप्रथवव्या
हृतिव्यसहितगायत्र्याप्रत्यर्कमेकमञ्जलिमञ्जलित्रयंवा
दद्यात् तत ऊर्द्धबाहुरादित्याभिमुखोभूम्यसंलग्नगुल्फ
तलभागोभूमिलग्नैकचरणोभूमिलग्नार्धचरणोवा सूर्य
मुपतिष्ठेतैभिर्मन्त्रैः । ओं उदुत्यञ्जातवेदसन्देवव्वँहन्ति

टीका ।

न्यु संतिप्रातःसपवित्रंच पावनामुरभिमत्याब्लिङ्गाभि
र्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिरन्यैश्च
पवित्रैरात्मानम्प्रोक्ष्यप्रयतोभवतीति ॥ ततोमार्जनमाह
कुशत्रयंगृहीत्वेति ॥ छन्दोगपरिशिष्टे, शिरसोमार्जनंकुर्या
त्कुशैःसोदकविन्दुभिः । प्रणवोभूर्भुवःस्वश्चगायत्रीचतृती
यिका । अन्दैवत्यंत्र्यृचञ्चैतिचतुर्थमितिमार्जनम् ॥ कुशै
रित्यत्रबहुवचनं कपिञ्जलाधिकरणन्यायात्त्रित्वपर्यवसि
तम् ॥ यद्यपीदंमार्जनंप्राणायामात्प्रागेवाभिहितंधर्म
प्रदीपेतथाप्युक्तगोभिलानुसारात् प्राणानायम्यसम्प्रो
क्ष्यतृचेनाब्दैवतेनत्वितियाज्ञवल्क्यवचनाच्चप्राणायामा
नन्तरमेव मार्जनंसकलसामगाचारसिद्धमितिबोध्यम् ॥
मार्जनानन्तरंकरेणोद्धृत्यसलिलंप्राणमासज्जातवच ।
अपेदनायतासुर्वाथि: सकृदाघमर्षणमितिछन्दोगपरि
शिष्टोक्तमृतञ्चसत्यञ्चेतिसूक्तंजपेत् तदनन्तरंमाघमन

मूलम् ।

चित्रय: । हंसं विश्वाय सूर्य्यम् । ओं चित्रन्देवानामुदगा दनीकञ्चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्राद्यावापृथिवी अन्तरिक्षं सूर्य्य आत्मा जगतस्तस्थुषश्च ॥ ओं आयङ्गौः पृश्नि रक्रमीदसदन्मातरम्पुरः । पितरञ्च प्रयन्स्वः ॥ ओं अप त्यतायवो यथा नक्षत्रा यन्त्यक्तुभिः । सूराय विश्वचक्षसे ॥

टीका ।

माह गोभिलः उपस्पृश्य ततः पश्चान्मन्त्रेणानेन धर्मवित् ॥ अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः । त्वय्यज्ञस्त्व व्वषट्कार आपोज्योतीरसोऽमृतमिति ॥ एतच्चाचमनं स्मृत्युक्तत्वात्सर्व्वशाखिसाधारणं मतएव गोभिलच्छन्दोग परिशिष्टाद्यनुक्तमपि छन्दोगैः क्रियतएव ॥ ततः सूर्य्या याञ्जलिदानं छन्दोगपरिशिष्टे उक्ताचार्कं प्रतिप्रोक्षेत्त्रिके णाञ्जलिमम्भसइति । इदञ्च त्रिकद्वाञ्जलिमादित्यं क्षिपे दिति गोभिलोक्तेनदेशकुलाचारादिव्यवस्थया त्रिकल्पा तीतदाह एकमञ्जलिमञ्जलित्रयं वेति ॥ अञ्जलिमित्येक त्वस्याविवक्षितत्वादञ्जलित्रयदानमशुद्धमिति स्मृतिसारः रूपनारायणाह्निकादीनामप्ययमेवाशयः । प्रागुक्तगोभिल वाक्यमनुसरन्तो वामदेवोपाध्याया अञ्जलित्रयमेवलिख न्तिस्म ॥ ततः सूर्य्योपस्थानमाह ऊर्द्ध्वबाहुरिति ॥ छन्दो गपरिशिष्टे, तदसंसक्तपार्ष्णिर्वाएकपादर्द्धपादपि । कुर्य्या

मूलम् ।

र्वेवानाम्, चौं उद्वयन्तमसस्परि ज्योतिष्पश्यन्तउत्तरं स्वःपश्यन्तउत्तरम् । देवन्देवत्रासूर्यमगन्मज्योतिरुत्तमम् ॥ इतिच्छन्दोगैश्चोपस्थानमितिविशेषः ॥ अथ तर्पणम् ॥ नरसिंहपुराणीयस्नानविधिमाचरद्भिर्विष्णु

टीका ।

शतानन्दनन्दीशाराङ्गति ॥ अत्र असदस्मातरम्पुरइति पाठं मत्वाअसदमितिअदलृ विशरणगत्यवसादनेषुलुङि मिप् लृदित्वात्पुषादिसूत्रेणाङ्खेरङितिगुणविष्णुराह ॥ तैत्तिरीयशाखायांमाध्यन्दिनशाखायांद्वतीयाध्यायेतदीयमहीधरभाष्येमैथिलनिबन्धेषुचासदस्मातर मित्येव पाठ इतिसएवच्छन्दोगैराद्रियते प्रयश्मूद्दत्यत्र नश्चेति श्रुट्चर्त्वम् ॥ अपत्येतायवइति ॥ क्वचिद्विष्णुभाष्य पुस्तके अपत्येतापवइतिसूरायविश्वचक्षुषइतिचपाठो दृश्यतेसोऽस्माकमनभिमतः प्रामाणिकभाष्यपुस्तकेषु मूलोक्तएवपाठोलभ्यते । क्वचित्सुरायेतिहृस्वोकारयुक्तः पाठः ॥ तरणिर्विश्वदर्शतइति ॥ अत्र विश्वदर्शित इतिपठित्वा विश्वन्दर्शितव्यैन सवृतिगुणविष्णुर्व्याचष्टेसोऽयमपिपाठोऽस्माकमनभिमतएव माध्यन्दिनशाखायां त्रयस्त्रिंशाध्याये तदीयमहीधरभाष्येप्रामाणिकमैथिलनिबन्धपुस्तकेषुच विश्वदर्शतइतिपाठस्यैवनिर्व

मूलम् ।

पुराणीयमेवतर्पणङ्कर्त्तव्यं नरसिंहपुराणीयस्नानकल्प तर्पणानभिधानादनारभ्य। धीतविष्णुपुराणीयतर्पणस्यै वान्वयौचित्यात् तत्प्रयोगस्तु ओं देवास्तृप्यन्ताम्३ ऋषि: ओं ऋषयस्तृप्यन्ताम् ३ ओंप्रजापतिस्तृप्यताम् १ इति सकृत् देवविधिना पूर्वाभिमुखस्तर्पणंकृत्वा दक्षिणाभि मुखोऽपसव्येन पितृविधिनाषट्पुरुषादितर्पणंकुर्य्यात्

टीका ।

यात् दर्शतोदर्शनीयः । भृमृदृशियजिपर्विपच्यमितमि नमिहर्यभ्योऽतजितिसूत्रेण दृशेरतच्प्रत्ययः दर्शतःसो मसूर्ययोरित्युणादिकौमुदी ॥ उद्यामेषीति ॥ मन्त्रा र्थस्तु हेसूर्य पृथुक्षाः पृथून्यक्षानियस्मात्सःमेषादिषट्के भारतेवर्षतुलादिषट्केकुरुषूत्तरेषुतेनायं सर्वकालेपृथु क्षाःसूर्योभवति त्वमुदेषिकिंकुर्वन्द्यांदिवंरजोभूतस्वरूं निविष्टंमिमानःपरिच्छिन्दन् तथाजन्मानिपश्यन् उत्प त्तिभाजामुत्पत्तीरवलोकयन् कैरुदेषि अक्तुभिःकुटिल गमनैर्हयैरिति । उदेषीतिव्यवहितोपसर्गसम्बन्धः । क्वचित्पृथुक्षामिमानइतिपाठः गुणविष्णुभाष्येऽपिपु स्तकभेदेन पाठभेदोव्याख्याभेदश्चदृश्यते अपरातुपृथुक्षा विशेषणं पृथुगमनइत्यर्थः । पृथुक्षाइति । ओक्षाक गतौभावेक्विप्ताः पृथवोमहत्योयस्यसपृथुक्षाः अन्यत्र-

मूलम् ।

ओं अद्यामुकगोत्रः पिताऽमुकशर्म्मातृप्यतामिदन्तिलो दकन्तस्मैस्वधा ३ ओं अद्यामुकगोत्रः पितामहो मुकशर्म्मातृप्यता मिदन्तिलोदकन्तस्मैस्वधा ३ ओं अद्यामुकगोत्रः प्रपितामहोमुकशर्म्मातृप्यतामिदन्ति-लोदकन्तस्मैस्वधा ३ ओं अद्यामुकगोत्रोमातामहो

टीका ।

मानमिति ॥ अथतर्पणम् ॥ विष्णुपुराणे ॥ त्विरपः प्रीणनार्थाय देवानामपवर्जयेत् ॥ ऋषिभ्यश्चतथान्याय सकृच्चापिप्रजापतेः ॥ अनेनचविधिनातर्प्पणन्तुशुचिः कुर्य्यात्प्रत्यहंस्नातकोद्विजः ॥ देवेभ्यश्चऋषिभ्यश्चपितृ भ्यश्चयथाक्रममितिवचनंप्राप्तस्य नित्यतर्पणस्यैवानुष्ठा नमितिदेवऋषिप्रजापतिपित्रादि षटकतर्पणान्येवाव श्यकानि ॥ पितृभ्यइत्यत्रमातृभ्यश्चपितृभ्यश्चेत्येकशेष वृत्तिर्बोध्यम् ॥ यत्तुकाम्यस्नातःशृणुध्वमइत्युपक्रम्य माघेप्रमाते इत्यभिधानं विष्णुपुराणेतदन्यफलार्थम् । रत्नाकरादयोप्येवम् ॥ अथकाम्यम् मात्रे प्रमात्रे-तन्मात्रेगुरुपत्न्यै तथान्नृप ॥ गुरवेमातुलादिभ्यः स्निग्ध मित्रायभूभुजे ॥ इदञ्चापिजपेदम्बुदद्दात्मे च्छयान्नृप ॥ उपकारायभूतानांकृतदेवादितर्प्पणः ॥ देवासुरास्तथा नागायक्षगन्धर्वकिन्नराः ॥ पिशाचागुह्यकाःसिद्धाः

मूलम्।

ऽमुकशर्म्मातृप्यतामिदन्तिलोदकन्तस्मै स्वधा ३ ओं अद्यामुकगोत्रः प्रमातामहोऽमुकशर्म्मातृप्यतामिदन्तिलोदकन्तस्मै स्वधा ३ ओं अद्यामुकगोत्रोवृद्धप्रमातामहोऽमुकशर्म्मातृप्यतामिदन्तिलोदकन्तस्मै स्वधा ३ ओं अद्यामुकगोत्रामाताऽमुकदेवी तृप्यतामिदन्तिलोदकन्तस्यै स्वधा १ ओं अद्यामुकगोत्रापितामह्यमुकदेवीतृप्यतामिदन्तिलोदकन्तस्यै स्वधा १ ओं अद्यामुकगोत्राप्रपितामह्यमुकदेवीतृप्यतामिदन्तिलोदकन्तस्यै स्वधा १ ओं अद्यामुकगोत्रामातामह्यमुकदेवी तृप्यतामिदन्तिलोदकन्तस्यै स्वधा १ ओं अद्यामुकगोत्राप्रमातामह्य

टीका।

कूष्माण्डास्तरवःखगाः॥ जलेचराभूनिलयावाय्वाधाराश्चजन्तवः॥ तृप्तिमेतेप्रयान्त्वाशुमद्दत्तेनाम्बुनाखिलाः॥ नरकेषुसमस्तेषुयातनासुचयेस्थिताः तेषमाप्यायनायैतद्दीयतेसलिलम्मया॥ इदन्देवासुरादिकाम्यतर्प्पणन्देवविधिनाकर्त्तव्यमिति॥ शीतादिवशात् स्थलतर्प्पणपक्षेप्यञ्जलिप्रक्षेपोजलएवकार्य्य इति गङ्गधरमिश्राः॥ गोभिलीयमिति॥ आधुनिकैरलसैर्गोभिलीयस्नानविधेरननुष्ठाना तदीयतर्प्पणमपिनानुष्ठीयतेऽतोग्रन्थगौरवभयान्नतत्प्रयोगोलिखितोऽस्माभिः

मूलम् ।

मुकदेवीतृप्यतामिदन्तिलोदकन्तस्मै स्वधा १ ओं अद्या
मुकगोत्रावृद्धप्रमातामह्यमुकदेवीतृप्यतामिदन्तिलोदक
न्तस्मै स्वधा १ ततोऽन्यानपिभ्रातृपितृव्यादीन्स्मृत्वाञ्ज
लिनायान्तर्प्पयेत् ततः ओं येबान्धवाबान्धवावायेऽन्यज
न्मनिबान्धवाः ॥. तेतृप्तिमखिलायान्तुयश्चास्मत्तोऽभिवा
ञ्छति ओं येचास्माकङ्कुलेजाता अपुत्रागोत्रिणोमृताः
तेपिबन्तुमयादत्तंवस्त्रनिष्पीडनोदकम् इतिमन्त्रेण
प्राचीनावीतीदक्षिणाभिमुख आस्तीर्णकुशत्रयेस्थलेपि
तृतीर्थेनसतिलंवासोनिष्पीडयेत् ॥ गोभिलीयस्नान
विधिमाचरद्भिस्तु नमोब्रह्मणेनमोब्राह्मणेभ्य इत्यादि
गोभिलीयमेवतर्प्पणङ्कर्त्तव्यम् एवन्तर्प्पणङ्कृत्वाजलादु
त्तीर्य्यधौतेवाससीपरिधायोरुजङ्घे चरणौहस्तौमृदा
भिःप्रक्षाल्याचम्यतिलकङ्कृत्वातिष्ठन् सूर्य्याभिमुखो
गायत्रीञ्जपेत् ओं आगच्छवरदेदेवित्र्यक्षरेब्रह्मवादिनि ।
गायत्रिछन्दसाम्मातर्जप्येमेसन्निधीभव ॥ . गायन्तन्त्रा
यसेयस्माद्गायत्रीत्वन्ततःस्मृता इत्यावाह्य ओङ्कारस्यब्र-
ह्मऋषिर्गायत्रीछन्दोऽग्निर्द्देवता सर्व्वकर्म्मारम्भे विनि-
योगः भूर्भुवःस्वरित्यस्यप्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टु
भश्छन्दांस्यग्निवाय्वादित्यादेवताजपेविनियोगः गाय-
त्र्याविश्वामित्रऋषिर्गायत्रीछन्दः सवितादेवताजपे

मूलम्।

विनियोगः इतिऋष्यादिकंस्मर्त्तव्यम्, जपमन्त्रस्तु ओं भूर्भुवःस्वः तत्सवितुर्व्वरेण्यम्भर्गोदेवस्यधीमहिधियो योनःप्रचोदयात् ओं॥ जपस्तुसहस्रकृत्वः शतकृत्वो दशतऊर्द्ध्वंशतादर्व्वागपरिमितन्दशकृत्वोवा यथावकाशं रुद्राक्षादिमालयाकार्य्यः ततः ओं उत्तरेशिखरेजाते भूम्याम्पर्व्वतवासिनि॥ ब्रह्मणासमनुज्ञाते गच्छ-देवियथासुखमितिविसर्ज्जयेत्॥ अथ ब्रह्मयज्ञः॥ सचवाजसनेयिवदुक्तप्रकारेणछन्दोगैरपिकर्त्तव्यः तत स्तिलजलपुष्पपूर्णमञ्जलिमूर्द्ध्वपर्य्यन्तमुत्थाप्य ओं नमो विवस्वतेब्रह्मन्भास्वतेविष्णुतेजसे॥ जगत्सवित्रे शु

टीका।

श्रीदत्तछन्दोगाह्निकादौद्रष्टव्यःतिलकमिति॥ ब्रह्मवै वर्त्तेब्रह्मखण्डे, स्नात्वाआत्मामशापूतः कुर्य्यात्तुतिलक म्बुधैः॥ बाह्वोर्मूलेललाटेचकण्ठदेशेचवक्षसि॥ स्नान न्दानन्तपोहोमन्दैवम्पितृकर्म्मच॥ तत्सर्व्वन्निष्फलंय्याँ तिललाटेतिलकंविना॥ तथाब्राह्मणस्तिलकंकृत्वाकुर्य्या त्सन्ध्यान्तुतर्पणमिति॥ एषक्रमोवाजसनेयिनाञ्छ न्दोगानामपिस्थलसन्ध्यावन्दनपक्षेइतिबोध्यम्॥ उत्तरे शिखर इति अयञ्चमन्त्रोबहुषुछन्दोगाह्निकनिबन्धेषुन दृश्यते॥ जातवेदस इति॥ यद्यप्येषिमन्त्रः सर्गःपर्वद

मूलम् ।

अयेमवितं कर्म्म दायिने ॥ इत्यनेन ओं हंसः शु-चिषदितिमन्त्रं वा' आभ्यामिलिताभ्याञ्चांसूर्य्याया र्घन्दत्त्वाचकनमस्कृत्यशुचिः सोपानत्कोजलपूर्णपात्रमा-दायगृहंव्रजेत् ॥ अथ देवपूजा ॥ साचवाजसनेयि वत्पूर्व्वोक्तप्रकारेणछन्दोगैरपिकर्त्तव्या, मन्त्रे विशेषउच्यते ॥ तवसूर्य्यपूजनेमन्त्रः ॥ ओं वगमहाँ२ ॥ असि सूर्य्यवडादित्यमहाँ२ ॥ असिमहस्तसतोमहिमापनिष्ट ममह्लादेवमहाँ२ ॥ असि ॥ गणपतिपूजनेमन्त्रः ॥ ओं आतूनइन्द्रक्षुमन्तस्चित्रंग्राभंसङ्गृभायमहाहस्तोदक्षि णेन ॥ अग्निपूजनेमन्त्रः ॥ ओं अग्निन्दूतंवृणीमहेहो तारंविश्ववेदसम् । अस्ययज्ञस्यसुक्रतुम् ॥ दुर्गापूजने

टीका ।

तीतिपाठोबहुपुनिबर्न्धं पुहश्यतेतथापिपरिपद्दतीतिप्रती कमुपादायलिट्घट् सदिरा तेरितिपत्वमितिगुणविष्णु भाष्यानुसारात्कतिपयनिबन्धस्वरमाश्रसनःपरिपद्दती त्यपिकेचित्पठन्ति ॥ अयेति ॥ देवपूजानन्तरमित्यर्थः । तथाचनरसिंहपुराणम् ॥ पौरुषेणतुसूक्तेनततविष्णुं समर्च्चयेत् । वैश्वदेवन्ततः कुर्य्याद्बलिकर्म्मततः पर-मिति ॥ गौतमकल्पस्यबहवृचादिति, तस्यभूपरिसमू हनाद्यर्थ्यस्थापनान्तकुण्डिकासाध्यत्वादितिभावः कि

मूलम् ।

मन्त्रः ॥ ओंजातवेदसे सुनवामसोममरातीयतोनिदहातिवेदः । सनःपर्षदतिदुर्गाणि विश्वानावेवसिन्धुन्दुरितात्यग्निः ॥ ओं इमंस्तोममर्हतेइतिवा ॥ शिवपूजनेमन्त्रः ॥ ओं आवोराजानमध्वरस्यरुद्रं होतारं सत्ययजंरोदस्योः । अग्निंपुरातनयित्नोरचित्ताद्धिरण्यरूपमवसेकृणुध्वम् ॥ विष्णुपूजनेमन्त्रः ॥ ओं इदंविष्णुर्विचक्रमे त्रेधानिदधेपदम् ॥ समूढमस्यपांसुले ॥ अथ पञ्चमहायज्ञान्तर्गत वैश्वदेवबलिकर्म्मणी ॥ तत्रगौतमकल्पस्यदृष्टत्वाच्छाकलकल्पएवलिख्यते ॥ क्वचित्पात्रेजलंकृत्वा पात्रद्वयेपृथगन्नन्धृत्वाऽग्नौजलेस्थलेवाजुहुयात् ॥ ओं भूःस्वाहा ओं भुवःस्वाहा ओं स्वःस्वाहा ओं भूर्भुवः स्वःस्वाहा ओंदेवकृतस्यैनसोवयजनमसि-

टीका ।

त्वनिरग्निःशाकलकल्पएवप्रशस्तः तथाच वचनम् हुत्वा व्याहृतिभिः पूर्व्वन्ततोमन्त्रैश्च शाकलैः । भूतेभ्यश्च बलिन्दत्वाततोऽश्नीयाद्दनग्निमान् ॥ शाकलमन्त्राः देवकृतस्यैनस इत्यादयोऽष्टौतैर्ज्योतिष्टोमीययूप शकलाष्टकेनहोमविधानात्तथा चाश्वलायनः अष्टावष्टौ शकलान्याहवनीयेऽनुहरेयुर्देवकृतस्यैनसइति ॥ शकलानिखण्डानि एवञ्चान्यत्रापितन्मन्त्रकरणकोहोमः

मूलम् ।

स्वाहा, ओं पितृकृतस्यैनसोऽवयजनमसिस्वाहा, ओं मनुष्यकृतस्यैनसोऽवयजनमसिस्वाहा, ओं आत्मकृतस्यैनसोऽवयजनमसिस्वाहा, ओं यद्दिवाचनक्तञ्चैनश्चकृमतस्यावयजनमसिस्वाहा ओंयत्सुपन्तश्चजाग्रतश्चैनश्चकृमतस्यावयजनमसिस्वाहा, ओंयद्विद्वांसश्चाविद्वांस-

---

टीका ।

शाकलइत्युच्यते ॥ यद्यपिदेवकृतस्येत्यादिमन्त्रैरष्टाहुत्यात्मकएवशाकलहोमः सामवेदेपठितस्तथाप्युक्तस्मृत्यनुरोधात्सकलच्छन्दोगाचारा च्चादौव्याहृतिचतुष्टयाहुतिरन्तेचस्विष्टकृदाहुतिर्लिखिता ॥ अयञ्चहोमोऽग्नौजलेस्थलेवाकार्य्यः लौकिकेवैदिकेवापिहुतोच्छिष्टे जलेक्षितौ वैश्वदेवञ्चकुर्वीत पञ्चसूनापनुत्तयइतिशातातपवचनात् इयांस्तुविशेषोयदग्नौहोमे भूतबलिसंस्काराः सर्व्वेपिकार्य्याः जलक्षित्योस्त्वाहुति मात्रन्नतयोःसंस्कार इति ॥ शेषान्नेनेति ॥ याज्ञवल्क्यः ॥ देवेभ्यश्चहुतादन्नाच्छेषाद्भूतबलिंहरेदिति॥ गयनाशेत्वन्यदप्यादायकर्त्तव्यमितिभट्टभाष्यम्, अतहुत्वाव्याहृतिभिः पूर्वमितिप्रागुक्तवचनेभूतेभ्यश्चेत्यत्रचकारादादौ देवबलिरन्तेच पितृबलिरितिस्मृतिसाराङ्किकतत्वादयः ॥ यद्यप्यस्मिन्कल्पे बलयोनोक्तास्तथाप्याचादेवलिखिता

मूलम् ।

श्चे नस्वकृमतस्यावयजनमसिस्वाहा ॥ ओं एनस एनसो ऽवयजनंमसिस्वाहा ओंअग्नयेस्विष्टकृतेस्वाहा ॥ ततः शेषान्नेनतत्पात्रपश्चिमतोभूमौ ओं सर्वेभ्योदेवेभ्योनमः ओं सर्वेभ्योभूतेभ्योनमः इतिदेवविधिनाबलिद्वयन्दत्वा अक्किन्नमिक्त्वा ओं पितृभ्यःस्वधा इतिपितृविधिनाऽप-सव्येनबलिन्दद्यादभिषिञ्चश्च ॥ ततः सव्येन भूतो पकारार्थमन्नान्तरेणशुचिभूमौ विष्णुपुराणोक्तकाम्यब-लीन्दद्या त्तत्प्रथममन्नमादाय ओं देवामनुष्याःपशवो वयांसिसिद्धाः सयक्षोरगदैत्यसंघाः । प्रेताः पिशाचा स्तरवः समस्तायेचान्नमिच्छन्तिमयाप्रदत्तम् ॥ पिपी-डिकाकीटपतङ्गकाद्याबुभुक्षिताः कर्मनिबन्धबद्धाः । प्र-यान्तुते तृप्तिमिदम्मयान्नन्तेभ्यो विसृष्टंसुखिनोभवन्तु ॥ येषान्नमातानपितानबन्धु र्नैवान्नसिद्धिर्नतथाऽन्नमस्ति । तत्तृप्तयेऽन्नम्भुविदत्तमेतत्ते यान्तु तृप्तिम्मुदिताभवन्तु ॥

---

टीका ।

इतिप्राञ्चः । अपरेतुअग्न्यादिर्गौतमेनोक्तोहोमः शाक-लएवच ॥ अनाहिताग्ने रप्येषयुज्यतेवलिभिः सहेति-कर्मप्रदीपवचनम्प्रमाणयन्ति, किञ्चस्कन्दपुराणीय का-शीखण्डमपिप्रमाणम्, तथाहिभूराद्याव्याहृतीभिश्चः स्वाहान्ताःप्रणवादिकाः । भूर्भुवःस्वःस्वोमिति विप्रोद-

मूलम् ।

भूतानिसर्वाणि तथान्नमेतदहञ्चविष्णुर्नयतोऽन्यदस्ति ।
तस्मादहम्भूतनिकायभूतं मन्नम्प्रयच्छामि भवायतेषाम्॥
चतुर्दशोभूतगणोयएष तत्रस्थितायेऽखिलभूतसङ्घाः ।
तृप्त्यर्थमन्नं हिमयाविसृष्टं तेषामिदन्ते मुदिताभवन्तु ॥
इत्युच्चार्यबलिमेकन्दद्यात् ॥ ततो भूमावेववायसबलिं
श्ववलिञ्चदद्यात्तत्रमन्त्रौ ॥ ओं ऐन्द्रवारुणवायव्या
याम्यावै नैर्ऋतास्तथा । वायसाः प्रतिगृह्णन्तु भूमौ
पिण्डं मयाऽर्पितम् ॥ ओं श्वानौद्वौश्यावशबलौ वैव-
स्वतकुलोद्भवौ । ताभ्यांपिण्डं प्रयच्छामि स्यातामेता

टीका ।

द्यात्तथाहुतिम् ॥ तथादेवकृतस्याद्याज्जुहुयाद्दष्टचाहु-
तीः । सर्वेभ्यश्चापिदेवेभ्यो भूमौदद्यात्तथाबलिम् ॥ स-
र्वेभ्यश्चापि भूतेभ्योनमोदद्यात्तदुत्तरे । दक्षिणेऽपिपितृ-
भ्यश्चप्राचीनावीतिकोददेदिति ॥ ददेदित्यार्षःप्रयोगः
विश्वे भ्यश्चापिदेवेभ्यइतिपाठान्तरम् ॥ पिपीड़िकेति ॥
क्वचित्पिपीड़िकाः कीटेतिसविसर्गः क्वचिच्च पिपीलि-
केतिसलकारः पाठोऽयमन्त्रे दृश्यते ॥ ततोभूमाविति ॥
इमौचश्वकाकबलौ तयोरुपयोगिस्थानेदातव्याविति-
बुधाः श्वबलिमन्त्रे श्वानौद्वौश्यामशबलावित्यपिकेचि
त्पठन्ति वेदेमकारान्तस्यनाम्नोदर्शनात् ॥ ततः सकल

मूलम् ।

वहिंसकौ ॥ तत आचामेत् ॥ ततः ओं पतितेभ्यो नमः ओं चाण्डालेभ्योनमः ओं पापरोगिभ्योनमः ओं कृमिभ्योनमः इतिबलिचतुष्टयं शनकैर्भूमावुपनिःक्षिपेत् अत्रचप्रतिर्बलिभूमिं प्रोक्ष्यबलिन्दत्त्वा तदुपर्य्यभिषिञ्चयेत् ॥ अथ नित्यश्राद्धम् ॥ अपवित्रः पवित्रो वेतिपठित्वा पुण्डरीकाक्ष स्मरणेनान्नं प्रोक्ष्यदक्षिणाभिमुखोऽपसव्ये न मोटकतिलजलान्यादाय ओं इदम न्नम्पितृभ्यःस्वधा इत्येकदोत्सृजेत् सतिसमयेऽन्नाधिक्येच पित्रादिभ्यस्त्रिभ्यो मातामहादिभ्यश्चत्रिभ्य स्तत्तन्नाम गोत्रोच्चारणपूर्वकं पृथगेवदद्यात् ॥ ततो नित्यीत्युदक्षु

टीका ।

प्रामाणिकच्छन्दोगाह्निकाद्दत्तं पतितादिबलिचतुष्टयमेव दद्यान्नशाजसनेयिवच्छ्वादिबलीनपीति ॥ अत्रायमाशयः प्रतिभाति ॥ शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम् । वायसानां कृमीणाञ्च शनकैर्निःक्षिपेकुर्वीतिमनूक्तबलिषु श्ववायसबल्योः प्रागुक्ताव्यासोक्तासमन्त्रकबलिभ्यामेवसिद्धत्वादवशिष्टं बलिचतुष्टयमेवदेयमिति ॥ इदञ्चवैश्वदेवाख्यं कर्मपुरुषार्थमेव नान्नसंस्कारार्थमतएव अथातः पञ्चमहायज्ञानित्युपक्रम्य तानेतान्यज्ञानहरहः कुर्वीतेत्यादिनाऽऽश्वलायनेन

मूलम् ।

भ्यः ओं इदमन्नं मनुष्येभ्योहन्त इतिमनुष्येभ्योदद्यात् ॥ ततोयतिने ब्रह्मचारिणे चान्नार्थमुपस्थिताय स्वस्तिवाचयित्वोदकपूर्वांग्रासमात्रीं भिक्षांदद्यात् अन्येभ्योऽपियथाशक्ति ॥ अथगोग्रासः ॥ ओं सौरभेय्यः सर्वहिताः पवित्राः पुण्यराशयः । प्रतिगृह्णन्तुमेग्रासं गावस्त्रैलोक्यमातरः ॥ इतिमन्त्रेणमात्रग्रासमुष्टिरूपं ग्रासं

---

टीका ।

तेषांनित्यत्वाभिधानं संगच्छते ॥ कात्यायनः ॥ सायं प्रातर्वैश्वदेवः कर्तव्योबलिकर्मच । अनश्नताऽपिमततमन्यथाकिल्बिषीभवेदिति ॥ परिशिष्ट प्रवासस्थितस्याप्यवश्यकर्तव्यताप्रदर्शिता । एवमन्नाश्रिताग्निश्चेत्कदाचित्कालपर्ययात् । यस्मिन्नन्नोभवेत्पाको वैश्वदेवस्तु तत्रवै ॥ मनुरपि पुरुषार्थत्वमेवाह, वैश्वदेवेतु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् । तस्मा अन्नं यथाशक्ति प्रदद्यान्नबलिंहरेदिति ॥ यद्यन्नसंस्कारकत्वं तदापुनःकरणनिषेधोनयुज्येतेति, अतएव वैश्वदेवात्प्रागपि सिद्धान्ने न श्राद्धकरणमुपपद्यते ॥ केचिदुभयात्मकत्वं वैश्वदेवस्येच्छन्ति अथसायंप्रातः सिद्धस्यहविष्यस्यजुहुयादित्याश्वलायनेनान्नसंस्कारकत्वस्याभिधानात् तेषांद्रव्यसंस्कारकर्मत्वपक्षेऽन्नार्थतावैश्वदेवकर्मणः पुरुषा-

मूलम् ।

परस्वगवेदद्यात् ॥ ततो वामदेव्यगानम् ॥ कयान इतिमन्त्रस्य वामदेवऋषिर्गायत्रीछन्द इन्द्रोदेवताऽग्निष्टोमादौद्वितीयपृष्ठशान्तिकर्म्मणि च विनियोगः ओं कयानश्चित्रआभुवदूती सदावृधःसखा । कयाशचिष्ठया वृता ॥ कस्त्वासत्योमदानां मंहिष्ठोमत्सदन्धसः । दृढ़ाचिदारुजेवसु ॥ अभीषुणःसखीनामविताजरि-

---

टीका ।

र्थत्वे वैश्वदेवकर्मार्थताद्रव्यस्येति परस्परविरोधइति बोध्यम् ॥ अथनित्यश्राद्धम् ॥ अत्र यद्वक्तव्यं तद्वाजसनेयिनित्यश्राद्धे उक्तम्, मनुष्ययज्ञोऽपिप्राग्वत् ॥ यतिन इति ॥ ब्रह्मचारीयतिश्चैव विद्यार्थीगुरुपोषकः । अध्वगः क्षीणवृत्तिश्चषड़ेतेभिक्षुकाः स्मृताः ॥ इदन्तु अन्नेसिद्धे यदैव यतिब्रह्मचारिणोरुपस्थितिस्तदैवकार्य्यं नत्रकालनियमः । वैश्वदेवात्पागुपस्थितौतु नरसिंहपुराणम्, अकृतेवैश्वदेवेतु भिक्षौचगृहमागते । उद्धृत्य वैश्वदेवार्थंभिक्षान्दत्त्वा विसर्जयेदिति ॥ ग्रासमात्रीमिति ॥ मार्कण्डेयपुराणे मदालसाऽलर्कसंवादे ॥ ग्रासप्रमाणाभिक्षास्याद्ग्रं ग्रासचतुष्टयम् । अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः ॥ भोजनं हन्तकारं वा अग्रंभिक्षामथापिवा । अदत्त्वाच न भोक्तव्य यथा

मूलम् ।

वृषाम् । शतम्भवास्यूतये ॥ स्वस्तिनइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ओं स्वस्तिनोबृहस्पतिर्दधातु ओं प्राजापत्यवैं वामदेव्यम्प्राणाएतावेव प्रतिष्ठायो स्तिष्ठन्ति ओं पशवोवैवामदेव्यम्पशुष्वेव प्रतिष्ठायोत्ति ष्ठन्ति ओं शान्तिर्वैवामदेव्यं शान्तावेवप्रतिष्ठायांतिष्ठन्ति ओं यतएतत्कर्माच्छिद्रमस्तु ॥ इति छन्दोगानां पञ्चमहायज्ञविधिः ॥ अथो भयसाधारणोविधिः ।

---

टीका ।

विभवमात्मनः ॥ पात्रपूरणेतुफलाधिक्यं पद्मपुराणे ॥ यःपात्रपूरणींभिक्षां यतिभ्यः संप्रयच्छति । विमुक्तःसर्वपापेभ्योनासौदुर्गतिमाप्नुयात् ॥ अन्यत्र ॥ यतिहस्ते जलन्दद्याद्भैक्ष्यन्दद्यात्पुनर्जलम् । तद्भैक्ष्यं मेरुणा तुल्यं तज्जलंसागरोपममिति ॥ अथ गोग्रासःप्राग्वत् ॥ वामदेव्यगानमिति ॥ गोभिलः ॥ अपवर्ग्य कर्मणिवामदेव्यगानंशान्त्यर्थंशान्त्यर्थमिति ॥ अपवर्गसमाप्तिः ॥ कात्यायनः ॥ अन्तेचवामदेव्यस्यगानमित्यथवाविधा । अहोमकेष्वपिभवेद्यथोक्तंचन्द्रदर्शने ॥ वामदेव्यं गणेष्वन्ते बल्यन्ते वैश्वदेविके । चन्द्रदर्शने जननात्तृतीय शुक्लपक्षेनिष्क्रमणकर्मणि बालकस्य तद्दवलोकने ॥

मूलम् ।

विशेषस्तु कश्चिदुच्यते ॥ अथातिथिपूजा ॥ तत्र कृतनित्यक्रियो गोदोहमात्रमधिकं वा कालमतिथिप्राप्तये स्थित्वा प्राप्तानतिथीनादरातिशयेनाभ्युत्थाय नमस्कृ-

टीका ।

अथातिथिपूजेति ॥ अथेत्यस्य नित्यश्राद्धानन्तरमित्यर्थः । तथाच वसिष्ठः । पितृभ्योदद्यात्ततोऽतिथीन्पूजयेदिति ॥ एवञ्च स्मृत्यन्तरे वैश्वदेवानन्तर्य्याभिधानं ततः प्रागुपस्थितोनातिथिरित्येवम्परम् ॥ तथाच पराशरशातातपौ ॥ प्रियोवायदिवामूर्खोद्वेष्यः पण्डितएववा । वैश्वदेवेतु सम्प्राप्तेसोऽतिथिः स्वर्गसंक्रमइति ॥ मनुः ॥ सम्प्राप्तायत्वतिथयेप्रदद्यादासनोदके । अन्नञ्चैवयथाशक्तिसत्कृत्यविधिपूर्वकम् ॥ तृणानिभूमिरुदकंवाक्चतुर्थीचसूनृता । एतान्यपिसतांगेहेनोच्छिद्यन्ते कदाचन ॥ एकरात्रन्तुनिवसन्नतिथिर्ब्राह्मणः स्मृतः । अनित्यंहिस्थितोयस्मात्तस्मादतिथिरुच्यते ॥ नैकग्रामीणमतिथिं विप्रंसाङ्गतिकन्तथा । उपस्थितंगृहेविद्याद्भार्यायत्राग्नयोऽपिवा ॥ यत्रगृहेभार्याग्नीअपिस्यातां तत्राप्युपस्थितमेकग्रामवासिनं । साङ्गतिकं लौकिकैर्विचित्रपरिहासकथादिभिः सङ्गत्याभोजनमात्रार्थमितस्ततोभ्रमन्तञ्चातिथिं न विद्यात् । एतेनभार्याग्निरहि-

मूलम् ।

स्य स्वागतानामयप्रश्नादिभिः सत्कृत्य बहुपादयासने तदलाभे ऽबहुपादे ऽप्युपवेश्य ताम्रादिपात्रे जलमाहृत्य गुरोः स्वयमेवेतरस्य शूद्रद्वारा पादौ प्रक्षाल्य स्वाहन्नादि यथोक्तमाहं भोजयित्वा प्रियकथालापेन क्षणं स्थित्वा यान-

---

टीका ।

तस्य प्रवासस्थस्य नास्तिर्थिरितिबोधितम् ॥ याज्ञवल्क्यः ॥ अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः । मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥ परपाकरुचिर्नस्यादनिन्द्यामन्त्रणादृते ॥ देवलः ॥ अतिथिर्यं हमभ्येत्य यस्य प्रतिनिवर्तते । असत्कृतो निराशश्च सद्योहन्ति सतत्कुलम् ॥ यमः ॥ अतिथिर्यत्र वैग्रामं भिक्षमाणः प्रयत्नतः । शैते निरशनस्तत्र ब्रह्महत्या विधीयते ॥ बृहस्पतिः ॥ प्रीयते स्वागतेनाग्निरासनेन शतक्रतुः । पितरः पादशौचेन भोजनेन प्रजापतिः ॥ अभ्यागतानुवृत्तौ वसिष्ठः ॥ तं भोजयित्वोपासीत ततो गच्छन्तमनुव्रजेदासीमान्तमनुज्ञानाद्वा ॥ आपस्तम्बः ॥ यानमन्तमायानाद्यावन्नानुजानीयादितरमप्रतिभायामासीमान्तो निवर्त्तेत ॥ इतरं यानरहितम् । अप्रतिभायामनुज्ञानास्फूर्तौ ॥ विष्णुपुराणे ॥ दिनातिथौ च विमुखे गते यत्पातकं भवेत् । तदेवाष्टगुणं पुंसां

मूलम् ।

वस्त्रमायानारोहणा दयानवस्त्रमनुज्ञापर्यन्तं मम-
नुज्ञाने ग्रामसीमान्तमनुव्रज्य विसर्जयेत् तत्रैव वस्तु-
कामस्त्वशय्यादिदानेनसंपूज्य प्रातर्विसर्जयेत् अधि-
कदिनवासनेतु फलाधिक्यम् ॥ एवमेव रात्रावपि ॥
अतिथ्यलाभेन्द्रयज्ञस्थितार्थमतिविभवे ऽन्य पित्रायणो

टीका ।

सूर्योढं विमुखेगते ॥ सूर्योढः सूर्यास्तमनसमयायातः
विष्णुपुराणे ॥ प्रतिश्रयंतथा शय्यांपादाभ्यङ्गंसदीपकम्
प्रत्येकदानेनाप्नोति गोप्रदानसमंफलम् ॥ प्रतिश्रयोवास-
गृहम् ॥ देवलः ॥ नाश्नतंभोजयेद्विप्रंस्वगृहेसतिसर्पिषि
परत्वनिरयंघोरंगृहस्थःप्रतिपद्यते ॥ मिष्टमन्नंस्वयंभुक्त्वा
पश्चात्कदशनंलघु । ब्राह्मणंभोजयेन्मूर्खोनिरयंचिर-
माविशेत् ॥ मनुः ॥ आसनावसथौशय्यामनुव्रज्या
मुपासनाम् । उत्तमेषूत्तमंकुर्य्याद्धीनेहीनंसमेसमम् ॥
बहूनामन्नदानाशक्तावेकस्मा अपि प्रथमागतायगुणवते
ऽन्नन्देयम्, तदसम्भवेयथाशक्तिफलमूलोदकाद्यपिदेयमेव
याज्ञवल्क्यः ॥ भोजयेदागतान्कालेसखिसम्बन्धिबान्ध-
वान् । बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ॥
संभोज्यातिथिभृत्यांश्चदम्पत्योःशेषभोजनम् ॥ दक्षः ॥
पञ्चमेचतथाभागेसम्विभागोयथार्हतःदेवपितृमनुष्याणां

मूलम् ।

भोजयितव्यः ॥ अथभोजनविधिः ॥ भोजनस्थानाद्बहि रेवाजानुपादावामणिबन्धात्पाणीच प्रक्षाल्ययथाविधि द्विराचम्यगोमयाद्युपलिप्ते शुचिदेशे शुभासनउपवि-श्योदकेनात्मानमन्नं च वेष्टयित्वा ब्राह्मणादिक्रमेणच-तुष्कोणत्रिकोणवर्तुलार्द्धचन्द्राकृतिमण्डलंकुर्यात्शूद्रो

टीका ।

कीटानांचोपदिश्यते ॥ संविभागंततःकृत्वागृहस्थःशेष-भुग्भवेत् ॥ संविभागोविभज्यप्रतिपादनम् ॥ अन्न-पाकस्तुपित्तलादिपात्रेकार्य्यः तदभावेमृन्मयभाण्डेऽपि तत्र विशेषमाहब्रह्मवैवर्त्ते, नित्यंनूतनभाण्डे नकर्त्तव्यः पाकएवच । अथवा पक्षपर्यन्तं ततस्त्याज्यं मनीषिभिः तथा ॥ चन्द्रसूर्योपरागेचाशौचेमृतकजातयोः । स्पृष्टे चाशुचिनासद्यःपाकभाण्डं परित्यजेदिति ॥ पाकभाण्ड मित्युपलक्षणंजलघटादीनामपि ॥ अथ भोजनविधि मुपक्रमतेभोजनस्थानाद्बहिरित्यादिना ॥ तत्रबौधायनः सुप्रक्षालितपाणिपादोऽपआचम्यशुचौदेशेऽन्नमुपसंहृत मुपसंगृह्यकामक्रोधलोभमोहानपहत्य सर्वाङ्गुलीभिः शब्दमकुर्वन्प्राश्नीयान्नपिण्डशेषंपात्र्यामुत्सृजेत् ॥ उप-संहृतमुपनीतम् । उपसंगृह्य पाद्रेणस्वीकृत्य । शब्दं सीत्कारादिकम् । पिण्डशेषंकवलशेषम् ॥ ब्रह्मपुराणे

मूलम् ।

र्ध्य चषमात्रं वा कुर्यात् ॥ यथेष्टजनपरिविष्टमन्न-मभ्यर्च्यतादिपात्रस्थंदृष्ट्वाहृष्टमनाः प्राञ्जलिरस्माकं नित्यमेतदस्त्वित्यभिलप्यपुनर्भोक्तारःप्रणमेत् । ततः पौं

टीका ।

वासनस्थस्तुयोमोहात्पङ्क्तिमध्य उपस्पृशेत् । विप्रेन्द्रो-जनभूमिश्च अप्रक्षालितपाणिमान् ॥ ससर्वधान्युत्पापं तद्भुङ्क्तिनराधमः । तस्माद्बहिरुपस्पृश्य आचान्तः प्रविशेद्गृहमिति ॥ तथा ॥ पात्रेष्वथानुरूपेषु पुत्रभ्र-त्यानुजैःसह । भूमौपात्रंप्रतिष्ठाप्यमौनेनान्नम्भक्षयेत् विष्णुपुराणे ॥ विशुद्धवदनःप्रीतोभुञ्जीत न विदिङ्मुखः विदिङ्मुखःकोणाभिमुखः ॥ मनुः ॥ आयुष्यंप्राङ्मुखो भुङ्क्तेयशस्यं दक्षिणामुखः । श्रियंप्रत्यङ्मुखोभुङ्क्तेऋतं भुङ्क्तेउदङ्मुखः ॥ ऋतंसत्यंसर्वत्रच्छन्दतिशेषः । द-क्षिणामुखभोजनं प्रमीतमातृविषयम्,तथाचापस्तम्बः । दक्षिणामुखोन भुञ्जीत अनायुष्यं त्वेवंमुखस्य भोजनं मातुरित्युपदिशन्तीति ॥ गौडनिबन्धे केचित्तु न जीव त्पितृकः कुर्याद्दक्षिणामुख भोजनमित्याचाररत्नाकर धृतवचनाज्जीवत्पितृकस्यापिनिषेधमाहुरिति ॥ भोजने प्राणाहुतिपर्य्यन्तये मौनस्यनियमः पञ्चग्रासान्महामौनं प्राणाद्याप्यायनाय तदिति विष्णुपुराणात् महामौनं

मूलम् ।

तेजोऽसिशुक्रमस्यमृतमसि धामनामासिप्रियन्दे वाना-
मनाधृष्टन्देवयजनमसिइतिजपन्प्राश्नमित । ततोऽन्नदोष-
मकीर्तयन् दक्षिणपार्श्वे मण्डलाभ्यन्तरे स्वदेशकुला-

टीका ।

हुङ्कारादिरहितम्, तथाचात्रिः । मौनव्रतंमहाकष्टं
हुङ्कारेणैवनश्यतीति ॥ ततःपरन्तुनियमःकाम्यत्वात्
पराशरः ॥ यदीच्छेत्सर्वपापानिहन्तुंनिरवशेषतः ।
मौनेनान्नंसमश्नीयाद्गन्माशिरमास्वपेदिति ॥ काशी-
खण्डे ॥ यावदेवान्नमश्नीयान्न्ब्रूयात्तद्गुणागुणान् । अतो
मौनेन योभुङ्क्तेसभुङ्क्तेकेवलामृतमिति ॥ केचित्तु
भोजनेसर्वदैवमौनमावश्यकम्,स्नातस्यवरुणस्तेजोभुञ्ज-
तोऽग्निःश्रियंहरेत् । भुञ्जानस्ययमस्त्वायुस्तस्मान्नव्या-
हरेत्त्रिष्विति भविष्योत्तरेतदकरणेऽनिष्टश्रवणादिति ॥
यमः ॥ प्राङ्मुखोऽन्नानिभुञ्जीतपश्चादार्द्रोवाग्यतः शुचिः
आर्द्रपादस्तुभुञ्जानः शतंवर्षाणिजीवति ॥ पश्चादार्द्र इ-
त्यत्रहयेकर इयं मुखेचजलक्लिन्नः पुनरार्द्रपदोपादानं
फलार्थम् ॥ ब्राह्मणादिक्रमेणेति ॥ शङ्खः ॥ चतु
रस्रोब्राह्मणस्य त्रिकोणंक्षत्रियस्यतु । मण्डलाकृति
वैश्यस्यशूद्रस्याभ्युक्षणंस्मृतम् ॥ ब्रह्मपुराणे ॥ चतुरस्रं
त्रिकोणञ्चवर्तुलञ्चार्धचन्द्रकम् । कर्तव्यमानुपूर्व्ये-

मूलम् ।

चारित्रवलीन्द्रयात् ॥ तत्र तावद्राजसनैवेद्यन्नादिभिः एकस्मिन्पात्रे षड्नैवेद्यानिधृत्वा भूमौचषड्धृत्वा क्रमेणोत्सृजेत् ओं सूर्यायनमः ओं गणपतयेनमः ओं

टीका ।

चान्द्रायणादिपुमगडलम् ॥ अत्र शूद्रविषयेऽहं चान्द्राक्रत्वभ्य त्सायोर्विकल्पः । अभक्षं ति । हारीतः नकार्ष्णायसे नमृत्पात्रेनभिन्नावकीर्णे ॥ भुञ्जीतेतिशेषः कार्ष्णायसे लौहपात्रेभिन्न स्फुटिते अवकीर्णेशूद्रभोजनादिनाऽपवित्रे ॥ कामधेनौ पैठीनसिः ॥ ताम्ररजतसुवर्ण मुक्ताश्मशङ्खस्फटिकानांभिन्नमभिन्नम् ॥ न दुष्टमित्यर्थः ॥ पात्रगुणानाह वैद्यकेभावप्रकाशे ॥ दोषहृद्दृष्टिदंपथ्यं हैमंभोजनभाजनम् । रौप्यं भवति चक्षुष्यं पित्तहृत्कफवातकृत् ॥ कांस्यम्बुद्धिप्रदंरुच्यं रक्तपित्तप्रसादनम् । पैत्तलंवातकृद्रूक्षमुष्णंक्रमिकफप्रणुत् । पात्रं पद्ममयंरुच्यं दीपनंविषपापनुदिति ॥ वैद्यकेआयसादिपात्रविधिस्तुदृष्टार्थएव ॥ इष्टमनाद्रुति ॥ मनुः ॥ पूजयेदशनंनित्यमद्याच्चैतदकुत्सयन् । दृष्ट्वाहृष्येत्प्रसीदेच्चप्रणमेच्चैवसर्वदा ॥ मार्कण्डेयपुराणे ॥ उपघाताहृतेदोषन्नान्नस्योदीरयेद्बुधः ॥ उपघातोऽशौचम् ॥ एवञ्चास्वत्तानमन्नस्यादिदोषानवुक्त्वे-

मूलम् ।

अग्नयेनमः ओंदुर्गादेव्यै नमः ओंशिवायनमः ओंभगवते श्रीविष्णवेनमः, भूमौ ओं ब्रह्मणेनमः ओं रुद्राय नमः ओं इन्द्रायनमः ओं चन्द्रायनमः ओं अर्काय नमः ओं वसुभ्योनमः । केचिन्नवैव बलीन्दद्यति पाते

टीका ।

वतानितानोऽमितवस्तूनियाद्यानि ॥ ब्रह्मपुराणे । वामेनपाणिनापात्रं गृहीत्वाभुविसंस्थितम् । तेजोऽसीतिजपन्नन्नं प्रणमेदमृतस्तुतत् ॥ तेजोऽसीतिमन्त्रेण वामेनपाणिनाधारणन्नकुर्वन्त्याचारविरोधात् किन्तुजलेनासेकमेव ॥ विष्णुपुराणे ॥ अन्नं प्रशस्तंपथ्यं च प्रोक्षितंप्रोक्षणोदकैः ॥ भुञ्जीतेतिशेषः ॥ मण्डलाभ्यन्तरइति ॥ ब्रह्मपुराणे ॥ ब्रह्मरुद्रेन्द्रचन्द्रार्कवसवो मण्डलान्तरात् ।. नवेद्दितंनरैरन्नं यस्माद्भुञ्जन्तिनान्यथा ॥ अकृत्वामण्डलंयेतु भुञ्जतेऽधमयोनयः । तेषान्तुयक्षरक्षांसिहरन्त्यन्नस्ययद्बलम् ॥ मण्डलकरणेदिशुपक्रमनियमोनास्ति प्रमाणाभावात् यद्यप्यत्र मन्त्रोऽपिनाम्नायतेतथापिमन्त्रानुक्तौगायत्रीतिशिष्टाचाराद्गायत्र्यामण्डलंकार्यमितिबहवः अतएवरूपनाथाह्निके गायत्र्याजलेनचतुष्कोणमण्डलं कृत्वेत्युक्तमिति केचिन्नवेति ॥ अयंत्वितेषामाशयः प्रतिभाति यद्युदेव

मूलम् ।

त्रीन् भूमौषट्त्वेषामुत्सर्गेऽयंक्रमः ओंनमो भगवते श्रीविष्णवेनमः ओं दुर्गादेव्यै नमः ओं गणपतयेनमः ओं ब्रह्मणेनमः ओंरुद्रायनमः ओंइन्द्रायनमः ओंचन्द्रायनमः ओं अर्कायनमः ओंवसुभ्योनमः॥ मैथिलेषु कतिपये माण्डरवंश्यब्राह्मणाः, कुलाचारात्पञ्चदेवताविष्णुभ्यो नैवेद्यानिदत्वा नागकूर्मकर्कोटकदेवदत्तधनञ्जयेभ्यो बाह्यवायुभ्यो नैवेद्यानिददति ॥ केचिद्दश केचिच्चै-कादशवलीन्ददतितेषा न्देवतानामपिननियमः तस्मा-दत्रकुलाचार एवनियामकः ॥ छन्दोगानाञ्चक्रवलि-

टीका ।

तात्रिषाना पञ्चानांमध्येसूर्यायार्करूपेण अग्नयेवसुरूपेण शिवायरुद्ररूपेणवलीनांदास्यमानत्वादवशिष्टेभ्योविष्णु-दुर्गागणपतिभ्यस्त्रिभ्यएव पाकनैवेद्यन्देयमिति ॥ नाग-कूर्मेति ॥ तथाचविष्णुपुराणे ॥ नागः कूर्मश्चकृकरो देवदत्तोधनञ्जयः । वहिः स्थावायवः पञ्चतेषां भूमौ प्र-दीयते ॥ पदस्थावाह्यवायुभ्यः प्राणादिभ्योनहोमवदिति ॥ केचित्तु नागः कूर्मश्चकर्कोटइतिपठन्ति । क्वचित्कर्कोटस्थानेकृकलासइतिपाठः ॥ छन्दोगानाञ्च-क्रवलिपुनारायणादिभ्योवलिदानमाचार परिप्राप्तमे-व ॥ यद्दिप्त्विति ॥ छन्दोगाश्लिक्षोत्तरेशङ्करमिश्रा

मूलम् ।

प्रकारस्तुभूमौ चतुरोबलीन्धृत्वा क्रमेणोत्सृजेत् ओँ नारायणायनमः ओँ भूपतयेनमः ओँ भुवनपतयेनमः ओँ भूतानाम्पतयेनमः ॥ यदितुवैश्वदेवात्प्राक्सूर्यादिभ्यः सिद्धमन्नं नदत्तं तदाभोजनकाल एवैकस्मिन्पात्रेपञ्चधान्नं विभज्यभूमौचचतुरोबलीन्हृत्वा ओँ सूर्याय नमः ओँ गणपतयेनमः ओँ दुर्गादेव्यै नमः ओँ शिवाय नमः ओँ विष्णवेनमः ओँ नारायणायनमः ओँ भूपत-

टीका ।

अप्येवम् ॥ भूपतयइत्यत्रभूः पतयइतिपाठोगुणविष्णुभाष्याद्दीहष्यते ॥ सवारित्विति ॥ ब्रह्मपुराणे ॥ हस्तेनलङ्घयेन्नान्नंसोदकेनकदाचन । दम्भाद्योलङ्घयेद्बुद्ध्या स्तेनान्नं निष्फलंभवेत् ॥ इतश्चान्नमभक्ष्यत्वमाहितस्यदुरात्मनइति ॥ अपःप्राश्येति ॥ अपोऽश्नन्नश्नीयात्मर्वतीर्थमयस्तुतत् । अमृतोपस्तरणमसीतिविष्णोरन्नमयस्यच ॥ अत्रासोत्यनन्तरंस्वाहाकारं कुर्वन्ति, अथोपस्तरणार्थन्तुप्राश्यतोयामृतंसकृत् अमृतोपस्तरणमसिस्वाहेत्यन्तेनतत्तुविदिति संन्यासपद्धतिलिखितवचनप्रामाण्यात् ॥ पुलस्त्यः ॥ करेणतुपिबेत्तोयं यावन्मांसंनभक्षयेत् । मांसलिप्तकरेतोयंतुल्यं गोमांसभक्षणमिति ॥ अत मांसलिप्तकरेणजलपान-

मूलम् ।

येनमः ओं भुवनपतयेनमः ओं भूतानाम्पतयेनमः इतिक्रमेणोत्सृजेत् ॥ छन्दोगानामपिकेचिद्दशबली-न्ददति केचिन्नवसप्तैवेत्येवमादयोबहवः पक्षाःसन्ति तत्र कुलाचारएवशरणम् ॥ ततः सधारिणापाणिनाऽन्न-मलङ्कुर्यन् ओं अमृतोपस्तरणमसिस्वाहा इत्यपः प्रा-श्यानामिकाङ्गुष्ठाभ्यांघृतप्लुतंस्तोकमन्नमादाय साङ्गु-

---

टीका ।

निषेधान्मांसलिप्तकरंप्रक्षाल्यैवापोऽशानंकर्तव्यम्, प्र-त्यपोऽशानेतुहस्तप्रक्षालननिषेधान्मांसलिप्तकरं प्रक्षाल्य पुनरन्नलिप्तकरेण प्रत्यपोऽशानंकर्तव्यमिति ॥ रघुन-न्दनोऽप्येवम् ॥ घृतप्लुतमिति नभुञ्जीताघृतंनित्यं ॥ गृहस्थोभोजनद्वयम् । पवित्रमथहृद्यञ्चसर्पिराकुरघाप-हम् ॥ विष्णुः ॥ नोच्छिष्टोघृतमादद्यात् ॥ स्मृत्यर्थ-सारे ॥ प्राणाहुतौघृताभावे पश्चाद्भुञ्जीतनोघृतमिति ॥ एवञ्चप्राणाहुतौघृतंगृहीतवतोभोजनकालेपुनरपिघृत-स्ययहणेनदोषइतिगम्यते अत्र घृतपदमुपलक्षणं तेना-न्यान्यपि भोज्यवस्तूनिगृहीत्वैव बहवोभुञ्जते ॥ अन्ये तूपलक्षणत्वेमानाभावाद्घृतातिरिक्तवस्तूनिपश्चादप्युपा-देयानीत्याहुः ॥ ब्रह्मपुराणे ॥ प्राणेभ्यस्त्वथपञ्चभ्यः स्वाहाप्रणवसंयुताः । पञ्चाहुतीस्तुजुहुयात्सर्वाग्निनि-

मूलम् ।

सर्वाङ्गुलीभिर्मध्यमोनोपस्थकृत्वो मुखेहुत्वाऽद्भ्यश्चि-
न्निगिरेत् तत्र बौधायनोक्तक्रमेणमन्त्राः ओं प्राणाय
स्वाहा ओं अपानायस्वाहा ओं व्यानायस्वाहा ओं
उदानायस्वाहा ओं समानायस्वाहा अथवा ओंप्राणाय
स्वाहा ओं अपानायस्वाहा ओं समानायस्वाहा ओं

---

टीका ।

भेषुच ॥ प्राणेभ्यः प्राणादिभ्यः पञ्चभ्यइत्यनुरोधात् ।
प्रणयाग्निनिभेष्वितिध्येयत्वार्थम् ॥ नातितृप्तौति ॥
मनुः ॥ अनारोग्यमनायुष्यमस्वर्ग्यं ह्यातिभोजनम् ।
अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥ अग्नौया-
दिति ॥ मनुः ॥ सायंप्रातर्मनुष्याणामशनन्देवनिर्मि-
तम् । नान्तराभोजनंकुर्य्यादग्निहोत्रसमोविधिः ॥ अ-
न्तराभोजननिषेधस्तु फलमूलादन्यत्र तथाचापस्तम्बः ॥
दिवाचनभुञ्जीतान्यत्र फलमूलेभ्यः ॥ चः पुनरर्थे ॥
दिवापुनर्भोजननिषेधोविवाहादृते नतपनयनमात्रेण
पाणिग्रहणाद्धिगृह्यमेधिनोर्व्रतं कालयोर्भोजनंतृप्ति-
श्चान्नस्येत्यापस्तम्बवचनादितिप्रश्नः ॥ छन्दोगपरि-
शिष्टे ॥ मुनिभिर्द्विरशनमुक्तं विप्राणांमर्त्यवासिनां
नित्यम् । अहनिचतथा तमस्विन्यांसार्धप्रहरयामान्तः ॥
अहनिमतिसम्भवे द्वंशोक्तपञ्चमभागेतदसम्भवेमध्या-

मूलम् ।

उदानायस्वाहा ओं व्यानायस्वाहा इतिविष्णुपुराणोक्तः क्रमः ओं प्राणायस्वाहा ओं व्यानायस्वाहा ओंअपानाय स्वाहा ओं समानायस्वाहा ओं उदानायस्वाहा इति ब्रह्मपुराणीयोवाक्रमोग्राह्यः ॥ ततोमौन्यमौनोवानाति-तृप्तिपर्य्यन्तमश्नीयात् ततोऽप्रक्षालितदक्षिणकरेण ओं अ-

टीका ।

मध्याह्नार्द्धरात्रादिनिषिद्धकालादन्यभागेऽपितमस्विन्यां रात्रौसार्द्धप्रहरयामान्तः अर्द्धप्रहरसहितप्रहराभ्यन्तरे एवञ्च मन्वादावपिसायंप्रातः अश्नीयात्परात्रौ एक-वाक्यतानुरोधात् । क्वचिन्मर्त्यवासिनामित्यत्र अप्र-वासिनामितिपाठः स्वगृहस्थितानामितितदर्थं एवञ्च प्रवासेस्थितानांनैषनियमः ॥ अत्र कालद्वयेभोजन-स्यनित्यतयाविधानात्तत्त्यक्ते सत्याञ्च बुभुक्षायांकार्प-ण्यादिनाऽभुञ्जन्प्रत्यवैत्येव ॥ अतएव बौधायनः ॥ गृहस्थोब्रह्मचारीवा योऽनश्नंस्तपआचरेत् । प्राणाग्नि-होत्रलोपेन अवकीर्णीभवेत्तुसइति ॥ प्राणाग्निहोत्रं प्राणाहुतिः अवकीर्णीलुप्तव्रतः । गृहस्थोवाहिताग्निः अनड्वान् ब्रह्मचारीच आहिताग्निर्व्रतैवयः । अश्नन्त एवसिध्यन्ति नैषांसिद्धिरनश्नतामित्यापस्तम्बवचनानु-रोधात् । अभोजननिषेधः प्रायश्चित्तादन्यत्र, तत्र

टीका ।

विशिष्यतद्विधानात् ॥ ब्रह्मपुराणे ॥ अथ्येकपङ्क्त्या नाश्नीयात्संहृतः स्वजनैरपि । कोहिजानातिकिंकस्य प्रच्छन्नंपातकंमहत् ॥ भस्मस्तम्भजलद्वारमार्गैः पङ्क्तिञ्च भेदयेत् ॥ कोहिजानातीत्यादिना पातकमन्देहेष्वे- कपङ्क्त्यानभोक्तव्यमित्युक्तं निर्दोषत्वनिश्चयेतु भोक्त- व्यमेव ॥ वैद्यकेभावप्रकाशे भोजनकालमाह ॥ याम मध्येनभोक्तव्यं यामयुग्मंनलङ्घयेत् । याममध्येरसो- त्पत्तिर्यामयुग्माद्बलक्षयः ॥ अन्यच्च ॥ सृष्टमूत्रविट् पक्ष्म शुरसदोषमलेषुच । कालेवायदिवाऽकालेसोऽन्न- कालउदाहृतः ॥ किञ्च ॥ उद्गारशुद्धिरुत्साहो वेगो- त्सर्गोयथोचितः । लघुताक्षुत्पिपासाच यदाकालः सभोजने ॥ भोजनात्प्राग्भक्ष्यमाह तत्रैव ॥ भोजनाग्रेसदापथ्यंलवणार्द्रकभक्षणम् । अग्नि- सन्दीपनंरुच्यं जिह्वाकण्ठविशोधनमिति ॥ ननुलव- णस्यपित्तजनकत्वादार्द्रकस्यच कटुकत्वेनपित्तविरो- धित्वाद्भोजनात्पूर्वन्तद्भक्षणमयुक्तमितिचेदुच्यते लवण- मत्रसैन्धवं त्रिदोषघ्नत्वात्तदुक्तंगुणरत्ने । सैन्धवंलवणं स्वादु दीपनंपाचनंलघु । स्निग्धंरुच्यंहिमंवृष्यंसूक्ष्मं नेत्र्यंत्रिदोषनुदिति ॥ एवमार्द्रकमपितत्तद्विरोधिमधुर- पाकित्वात् तदुक्तं तत्रैव आर्द्रिकाभेदिनीगुर्वीतीक्ष्णा

## टीका ।

आद्दीपनीयसा । कटुकामधुरापाके सूक्ष्मावातकफा·
पहा । अथवा संयोगस्वभावाद्विवर्णार्द्रं कफपित्तविरोधी
तिबोध्यम् ॥ तथा ॥ अश्नीयात्तन्मनाभूत्वापूर्वन्तुमधुरं
रसम् । मध्येऽम्ललवणौपश्चात्कटुतिक्तकषायकान् ॥
गुरुपिष्टमयंद्रव्यं तण्डुलान्पृथुकानपि । नजातुभुक्तवान्
खादेन्मात्रांखादेद्बुभुक्षितः ॥ मात्रामल्पपरिमाणाम्
तथा ॥ घृतपूर्वंसमश्नीयात्कठिनं प्राक्ततोमृदु । अन्ते
पुनर्द्रवाशीतुबलारोग्यं नमुञ्चति ॥ अयमर्थः ॥ प्राग्
घृतपूर्वंकठिनंसमश्नीयात् यथा काश्यादिवासिनःप्रथमं
सव्यञ्जनांघृतपूर्वांरोटिकांभुञ्जते ततोमृदु रूसूरादिक-
मोदनंभोजनान्ते दधितक्रदुग्धादिद्रवद्रव्यमश्नातीति ॥
तथा ॥ आहारंषड्विधंचूष्यं पेयंलेह्यन्तथैवच । भोज्यं
भक्ष्यं तथाचर्व्यं गुरुविद्याद्यथोत्तरम् ॥ चूष्यमिक्षुदाडि-
मादि, पेयंपानकशर्करोदकादि लेह्यं रसालाक्वथितादि
भोज्यंभक्तसूपादि, भक्ष्यं लड्डुकमण्डकादि, चर्व्यं
चणकचिपिटादि ॥ भोजनपरिमाणमाहवैद्यके ॥
गुरूणामर्द्धसौहित्यंलघूनांतृप्तिरिष्यते ॥ सौहित्यंतृप्तिः
आपस्तम्बः ॥ अष्टौग्रासामुनेर्भक्ष्याःषोडशारण्यवासिनः
द्वात्रिंशत्तुगृहस्थस्यअमितंब्रह्मचारिणः ॥ ब्रह्मपुराणे
कुर्यात्क्षीरान्तमाहारंनचपश्चात्पिबेद्दधि ॥ अपि अधि-

टीका ।

कम् दर्शीतिपाठोलोकविरुद्धः ॥ तथा ॥ जठरंपूरये-दर्द्धमन्नैर्भागंजलेनच । वायोः सञ्चरणार्थाय चतुर्थमवशेषयेत् । इत्यादिभक्ष्योत्तरं शीतजलंपेयं तथाच भट्टमल्लः । अनुपानंहिमजलंयवगोधूमनिर्मिते । दधि मद्ये विषेक्षौद्रेवपिष्टमिष्टमयेपिचेति ॥ भोजनकाले वामपार्श्वे जलपात्रधारणं केचिन्निषेधन्तिबहुवस्तुविद्-धस्येव तथाचानुपानवर्गेसुश्रुतः । प्रद्रवाणिरसांश्चैव पानीयंपानकंपयः । खण्डान्यूषांश्चपेयांश्चसव्ये पार्श्वे प्रदापयेदिति । यत्तु वामपार्श्वे स्थितंतोयं योभुङ्क्ते ज्ञानदुर्बलः । मासेमासेमलंभुङ्क्ते पानीयंरुधिरंभवे दितिवचनं प्रायश्चित्तविवेकटीकायांगोविन्दानन्देनधृतं तदसंदिग्धमूलमेव । लघुहारीतः । पयःपानंपुनर्स्नानं सामिषंपयसानिशि । दन्तच्छेदनंमुष्णञ्च सप्तसक्तुषु वर्ज्जयेत् । पयसेत्यत्रसहार्थेसहयोगंविनापितृतीया । दन्तच्छेदनंतृणखण्डकयादन्तवेधः । सुश्रुते । सक्तूना-माशुजीर्यत्वमृदुत्वादवलेहिका । महाभारते । पानीयं पायसंसर्पिर्मधुयुक्तंमधून्यपि । निरस्यंशेषमेतेषां न प्रदेयन्तुकस्यचित् । निरस्यं निःशेषमशनीयम् । यदि दैवाच्छेषमवशिष्यते तदानकस्मैचिदपिदेयमित्यर्थः । त्रिविधाभोक्ष चक्रदत्तवैद्यके ॥ नात्यादर्द्रोर्ध्वमप्रक्षा-

टीका ।

सकासज्वराहितः । तथाऽऽस्यपाकजन्ने बधिरः काणी-
मयीचनत् ॥ विषयुक्तमन्नं सर्वथावर्जनीयं तल्लक्षणं
वैद्यके । रक्षेदन्नं विषान्नित्यंतत्परीक्षोच्यतेयथा । म्रियन्ते
मक्षिकाःस्पर्शादन्नं पर्युषितोपमम् । विष्णुः । नैकोमिष्टं
नोद्धृतस्नेहं न दिवाधाना नरात्रौतिलसम्बद्धं नदधि
शक्तून्नकोविदार वटपिप्पलशणशाकम् । उद्धृतस्नेहं
खल्यादिदधिसक्तूनित्यवापिरात्रावित्यनुषज्यते । ब्रह्म-
पुराणे ॥ यस्तुपाणितलेभुङ्क्ते यश्चफूत्कारसंयुतम् ।
प्रसृताङ्गुलिभिर्यस्तुतस्यगोमांसवच्चतत् ॥ तथा ॥ ग्रास-
शेषन्नचाश्नीयात्पीतशेषंपिबेन्नतु । शाकमूलफलेक्ष्वादि
दन्तच्छेदैर्नभक्षयेत् ॥ दन्तैर्वाह्निक्कृत्वाकिन्त्वानभक्षयेत्
मुखप्रविष्टंतुतद्ग्रासपरोननिषिद्धः ॥ तथा ॥ बहूनां
भुञ्जतांमध्येनचाश्नीयात्त्वरान्वितः ॥ विष्णुः ॥ ननिःशे-
षभुक्स्यादन्यत्रदधिमधुसर्पिःपयःसक्तुशाकेभ्यः ॥ आप-
स्तम्बः ॥ ननाविभुञ्जीतनवाप्रासादेकृतभूमौतुभुञ्जीत
प्रासादोदारुबद्धतलः कृतभूमौमृदादिप्रक्षेपसम्पादित
भूमौनाविप्रासादेचभुञ्जीतेत्यर्थः ॥ देवलः ॥ स्वग्रामे
ग्रामतोवापिसन्निकृष्टेमृतेसति । न भुञ्जीताशनंविद्वा-
न्नस्यवैशोककारणात् । बौधायनः । भुञ्जानेषुतुविप्रेषु
यस्तुपात्रंपरित्यजेत् । भोजनेविघ्नकर्तासौब्रह्महाच

मूलम् ।

मृतापिधानमसिखाशा हृतिपुलकस्याचपः प्राश्यो-
त्थाय शुचिदेशउपविश्यमृदाजलेनच हस्तौमुखंच प्र
चाल्य तृणादिना नातियत्नेन दन्तलग्नंनिष्क्रिष्यशु-
चिपर्यन्तं गण्डूषान्कृत्वाऽऽमूलं पाणीप्रचाल्यमुखंपादौ

टीका ।

तयोच्यते ॥ पात्रत्यागोदेशान्तरगमनात् नचैतद्दलाद्भो-
जनकालेपात्रधारणापिप: ॥ शातातप: ॥ विद्यमानेन
हस्तेनब्राह्मणोज्ञानदुर्बल: । तोयंपिबतिवक्त्रे णश्वाऽसौ
जायेतनान्यथा ॥ वक्त्रे णगवादिपशुवदित्यर्थ: ॥ उद्धृत्य
वामहस्तेनयत्तोयंपिबतिद्विज: । सुरापानेनतत्तुल्यं
मनुराहप्रजापति: ॥ वामहस्तेनकेवलेनेत्यर्थ: । चप्र-
चालितेति ॥ शातातप: । हस्तंप्रचाल्यगण्डूषंय:पिबेद्
विचक्षण: । सदेवांश्चपितॄंश्चैवचात्मानञ्चैवघातयेत् ॥
बौधायन: ॥ नातिसुहितोऽमृतापिधानमसीत्युपरिष्टा-
दप: पीत्वाऽऽचान्त: पुनराचम्य दक्षिणपादाङ्गुष्ठेपाणिं
नि:स्रावयेदङ्गुष्ठमात्रइत्यादि ॥ देवल: ॥ भुक्त्वाऽऽचामे-
द्यथोक्तेनविधानेनसमाहित: । शोधयेन्मुखहस्तौच
मृदद्भिर्घर्षणेनच ॥ भोजनेदन्तलग्नानिनिर्हृत्याचमन-
चरेत् । दन्तलग्नमसंहार्यंलेपंमन्ये तदन्तवत् ॥ न तत्र
कुर्यात्कष्टमोचनमुद्धरणेपुन: भवेदशौचमत्यर्थं तृणवेधा-

मूलम् ।

च प्रक्षाल्ययथाविधिद्विराचम्य सक्तदोष्ठंपरिमृज्याचा-
रात्ताम्बूलपूगीफल जातीफलैलादिभिर्मुखशुद्धिं वि-
धाय दक्षिणपादाङ्गुष्ठेहस्तेनहस्ताभ्यां वाजलंनिःस्राव-
येत् । ओं अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्चसमाश्रितः । ईशः
सर्वस्यजगतःप्रभुः प्रीणातुविश्वभुक् ॥ इतिमन्त्रेण ॥
ततो गोप्रदानफलकामोवाङ्गमनुनीच वारिणासमा-
र्जयेत् ॥ ततो भोजनपात्रमुद्धार्य्यजाराम्बोदकादिभिः
संशोध्यभोजनस्थानं गोमयोदकादिभिरुपलेपयेत् ॥

---

टीका ।

इ, षेकृते ॥ अत्राचमनमुखशोधनयोरर्थक्रमानुरोधात्पा-
ठक्रमबाधः ॥ ताम्बूलेति ॥ मुखं तै ॥ कर्पूरजातिक-
क्कोललवङ्गकटुकाह्वयैः । सचूर्णपूगैःसहितंपर्णताम्बूलजं
शुभम् ॥ मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम् ।
हनुदन्तस्वरमलजिह्वेन्द्रियविशोधनम् ॥ प्रसेकशमनं
हृद्यं गलामयविनाशनम् । पथ्यं सुप्तोत्थितेभुक्तेस्नातेवा-
न्तेचमानवेइति ॥ ताम्बूलोपकरणत्वेन कस्तूर्य्यपिदेये
तिश्राद्धपल्लवकृतः ॥ अन्येतुशुष्कमांसत्वेनसानभक्ष्ये
तिवदन्ति ॥ गोप्रदानफलकामइति ॥ ब्रह्मपुराणे ॥
संमार्ज्य वाङ्गजानूच गोप्रदानफलंलभेत् । भुक्त्वाचैव
प्रतिष्ठेतनचाप्यार्द्रेणवाससा ॥ आचान्तोऽप्यशुचिस्ता-

मूलम् ।

ततः स्वस्थः प्रशान्तचित्त आसनपरिग्रहं कृत्वाऽभीष्टदेवताः स्मरेत् ॥ ओं अग्निराप्यायतान्धातून् पार्थिवान्पवनेरितः । दत्तावकाशोनभसाजरयत्वस्तुमेसुखम् ॥ अन्नम्बलायमे भूमेरपामग्न्यनिलस्य च । भवत्वेतत्परिणतौममास्त्वव्याहतंसुखम् ॥ प्राणापानसमानाना मुदानव्यानयोस्तथा । अन्नं पुष्टिकरंचास्तुममास्त्वव्याहतंसुखम् ॥ अगस्तिरग्निर्वडवानलश्च भुक्तंमयाऽन्नं जरयत्वशेषम् । सुखंममैतत्परिणामसंभवंयच्छत्वरोगं ममचास्तुदेहे ॥ विष्णुःसमस्तेन्द्रियदेहदेही प्रधानभूतो भगवान्यथैकः । सत्येनतेनान्नमशेषमेतदारोग्यदंमेपरिणाममेतु ॥ विष्णुरत्तायथैवान्नं परिणामश्चवैयथा । सत्येनतेनमद्भुक्तं जीर्यत्वन्नमिदन्तथा । एतान्मन्त्रानुच्चार्य

---

टीका ।

यदावत्पावमनुद्धृतम् । उद्धृतेऽप्यशुचिस्तावद्यावन्नोन्मृज्यतेमहीति ॥ स्वस्थइति ॥ विष्णुपुराणे ॥ स्वस्थःप्रशान्तचित्तस्तुकृतासनपरिग्रहः । अभीष्टदेवतानाञ्चकुर्व्वीत स्मरणंततः ॥ अग्निराप्यायतान्धातूनित्यारभ्यजीर्यत्वन्न मिदन्तथेत्यन्तमन्त्रानुक्त्वा इत्युच्चार्य्यस्वहस्तेनपरिमृज्यात्तथोदरम् । अनायासप्रदायीनिकुर्य्यात्कर्म्माण्यतन्द्रित इति । अगस्तिरग्निरितिमन्त्रे अरोगोममचास्तुदेहःइति

## टीका ।

क्वचित्पुस्तके पाठः ॥ अथ प्रसङ्गात्संक्षिप्य भोज्याभोज्यनिर्णयः ॥ तत्र यमः ॥ अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् । वैश्यस्यान्नं त्वन्नमेव शूद्रस्य रुधिरं स्मृतम् ॥ मनुः ॥ नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः । आददीताममेवास्मादवृत्तावेकरात्रिकम् ॥ शास्त्रविद् ब्राह्मणः अश्राद्धिनः श्राद्धादिपञ्चयज्ञशून्यस्य शूद्रस्य पक्वान्नं न भुञ्जीत किन्त्वन्नान्तरालाभे एकाहारसममामान्नं गृह्णीयादित्यर्थः शूद्रस्यापि कस्मिंश्चित्पक्वान्नानि ग्राह्याण्याहाङ्गिराः । गोरसं चैव सक्तूंश्च तैलं पिण्याकमेव च । अपूपान् भक्षयेच्छूद्राद्यच्चान्यत्पयसा कृतम् पिण्याकस्तिलखलिः शूद्रेषु भोज्यान्नानाह याज्ञवल्क्यः ॥ शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः । भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥ दासो गर्भदासः कुलमित्रं पितृपितामहादिक्रमेणागतमैत्रीम्प्राप्तः अर्द्धसीरी हलार्द्धफलग्राही लोके "अधहरी" इति यस्य प्रसिद्धिस्तद्वान् इति यावत् चकारात्कुम्भकारादयः सदाचारिणः, एतदप्यन्नान्तरालाभ एवेति प्रतिभाति पूर्वोक्तमनुनैकवाक्यतानुरोधात् ॥ हारीतः ॥ शूद्रान्नेन तु भुक्तेन जठरस्थेन यो मृतः । स वै खरत्वमुष्ट्रत्वं शूद्रत्वञ्चोपगच्छति ॥ न भुञ्जीतेत्यधिकारे मनुः अनर्चितं वृथामांसमवीरायाश्च योषितः ।' द्विष-

मूलम् ।

स्वल्पेनोदरंपरिसमाप्यानायासप्रदायीनिकर्म्माणिकुर्य्यात् ततइतिहासपुराणादीनांपठनेनश्रवणेनच षष्ठसप्तमौ दिनभागौक्षपयित्वाऽष्टमभागेलोकयात्रार्थंपरिभ्रम्या-स्तमनसमयेपूर्व्वलिखितप्रकारेणवहिःसायंसन्ध्यामुपास्य

टीका ।

दन्नं गणयन्नं पतितान्नमवक्षुतम् ॥ अवीरा पतिपुत्र-विहीना योषितइतिविशिष्य पुनरुपादानादसम्बन्धि-न्याएवनिषेधो नतुपितामह्यादिसम्बन्धिन्या अपीति बोध्यम् । अवक्षुतमुपरिकृतक्षिकाकम् ॥ ब्रह्मपुराणे ॥ एकेनपाणिनादत्तं न कदाचनभक्षयेत् । घृतंतैलञ्च लवणं पानीयंपायसन्तथा ॥ भिक्षातुहस्तदत्ताचा सा नयाह्याकदाचन । शूद्रभुक्तावशिष्टन्तुनाद्याद्भाण्डस्थि-तन्त्वपीति ॥ खिन्नतण्डुलादिभक्षणं ब्रह्मवैवर्त्ते ब्र-ह्मखण्डे । द्विःखिन्नमन्नं पृथुकं शुद्धं देशविशेषके । नातप्तशस्तंविप्राणां भक्षणेचनिवेदने ॥ अभक्ष्यं तद्य-तीनाञ्च विधवाब्रह्मचारिणाम् । ताम्बूलंचयथाब्रह्मन् तथैतैवस्तुनीध्रुवमिति ॥ पृथुकंचिपिटान्नम् । खिन्ना-न्नस्यसर्व्वथा अभक्ष्यत्वे तुहैमन्तिकंसितास्विन्नमितिव-चिग्धलघणे अस्विन्नमितिविशेषणंच व्यर्थंस्यात् । भृ-ष्टतण्डुलचिपिटाद्यपि पादप्रक्षाल्योपलिप्तस्थानएव

टीका ।

भोक्तव्यन्तथाचकृष्णखण्डे । भृष्टद्रव्यं तथाग्नेय भुक्त्वा
धौतेचवाससी । पादप्रक्षालनंकृत्वाभुङ्क्ते स्थानेपरि-
ष्कृतेइति ॥ अन्नंभक्तम् ॥ भविष्यपुराणे ॥ आय-
सेनतु पात्रेणयदन्नमुपनीयते । भोक्ताविष्ठासमंभुङ्-
क्ते दाताचनरकंव्रजेत् ॥ अकुल्याद्दन्तकाष्ठञ्च प्रत्यक्ष-
लवणंतथा । मृत्तिकाभक्षणंचैव तुल्यंगोमांसभक्षणम् ॥
अवतारणानंतरंयत्प्रक्षिप्यते तत्प्रत्यक्षलवणं तादृशम-
पिसैन्धवंसामुद्रञ्चानिषिद्धम्, सैन्धवंलवणंतद्वत्तथामान
समुद्भवम् । पवित्रेपरमेह्युक्ते प्रत्यक्षेऽपिनित्यशइतिव-
चनात् ॥ अथभोजनोत्तरदिन षष्ठादिभागकृत्यान्यु-
पदिशति तत्र इतिहासपुराणाद्यैर्वामिति ॥ दक्षः ॥
भुक्त्वातुसुखमास्थायतदन्नं परिणामयेत् इतिहासपुरा-
णाद्यैः षष्ठसप्तमकौनयेत् ॥ अष्टमेलोकयात्रास्तुबहिः
सन्ध्याततः परमिति ॥ भोजनोत्तरकृत्यमाहवैद्यकी
कयदेवकृतेपथ्यापथ्यविवेके ॥ ततः पदशतंगत्वावाम-
पार्श्वेन संविशेत् । वामपार्श्वाश्रयंपित्तंपित्ताद्वह्निः
प्रजायते । ततस्तेनैकपार्श्वेनभुक्तवान्संविशेन्नरः ॥
द्वात्रिंशन्मात्रावामेतु दक्षिणेपञ्चविंशतिः । मध्येद्वादश
मात्रात् शयीतन्नृपतिस्ततः ॥ मदनपालः ॥ भुक्त्वोप-
विशतस्तुन्दिवलमुत्तानशायिनः । आयुर्वामकटिस्थस्य

मूलम् ।

प्रमादादिनाऽकृतान्यावश्यककार्य्याणिप्रहराभ्यन्तरे कृत्वासायमागतानतिथीन्पूर्वोक्तप्रकारेणसत्कृत्यभोजयित्वामार्द्धप्रहराभ्यन्तरेनिशि सपरिवारोभुक्ताशयीत अधीयानश्चेत्प्रथमचरमयोर्य्यामयोर्वेदमभ्यसेदितरयोः शयीत ॥ अथशयनविधिः ॥ प्रक्षालितचरणोऽनार्द्रपा-

टीका ।

मत्युर्दर्शनिधावतः ॥ तथा ॥ सद्योमांसंनवन्नान्नं बालास्त्रीक्षीरभोजनम् । घृतमुष्णोदकस्नानंसद्यः प्राणकराणिषट् ॥ पूतिमांसंस्त्रियोवृद्धा बालार्कस्तरुणन्दधि । प्रभातेमैथुनंनिद्रा सद्यः प्राणहराणिषट् ॥ दिवास्वापोधर्मशास्त्रे पुनिषिद्धएव वैद्यकेविशेषमाहसुश्रुते । सर्वर्त्तुषुदिवास्वापः प्रतिषिद्धोऽन्यत्रग्रीष्मात् । प्रतिषिद्धे ष्वपितु बालवृद्धस्त्रीकर्षितक्षतक्षीणमद्यनित्ययानवाहनाध्वकर्मपरिश्रान्तानामभुक्तवतांमेदः स्वेदकफरसरक्तक्षीणानामजीर्णिनाञ्चमुहूर्त्तं दिवास्वपनमप्रतिषिद्धम् । रात्रावपिजागरितवतांजागरितकालादर्द्ध मिष्यतेदिवास्वप्नः ॥ विकृतिर्हिदिवास्वप्नोनाम तत्रस्वपतामधर्मः सर्वदोषप्रकोपश्च । तत्प्रकोपाच्च कासश्वासप्रतिश्यायशिरोगौरवाङ्गमर्दारोचकज्वराग्निदौर्बल्यानिभवन्ति रात्रावपिजागरितवतां वातपित्त-

## टीका ।

निमित्तान्न एवोपद्रवाभवन्तीति ॥ तथा ॥ निद्रासात्मीकृतायैस्तुरात्रौचयदिवादिवा । नतेषांस्वपतांदोषोजायतांवाविधीयते ॥ सात्म्य हितम्, तद्द्विविधंदेशतः प्रकृतितश्च । तवदेशसात्म्यात्प्रकृतिसात्म्यम्बलीय इतिकामसूतकारेष्वम्यतमः सुवर्णनाभः ॥ प्रमादादिनेति ॥ रत्नाकरेस्मृतिः । दिवोदितानि कर्माणिप्रमादादकृतानिच । शर्वर्याःप्रथमेयामेतानिकुर्य्यादतन्द्रित इति ॥ ब्रह्मवैवर्त्ते ॥ एकतारञ्चगगनंनपश्ये च्छुक्रजान्मयात् । दैवाद्दृष्ट्वाहरिंस्मृत्वा समधानारदंजपेत् ॥ सायं समयेइतिशेषः ॥ दीपकालःसंग्रहे ॥ रवेरस्तंसमारभ्य यावत्सूर्य्योदयोभवेत् । यस्यतिष्ठेद्गृहेदीपस्तस्यनास्ति दरिद्रता ॥ दीपशुभाशुभलक्षणं वृहत्संहितायाम् ॥ वामावर्त्तो मलिनकिरणःसस्फुलिङ्गोऽल्पमूर्त्तिः क्षिप्रं नाशंव्रजतिविमलस्नेहवर्त्यन्वितोऽपि । दीपः पापं कथयति लंफशब्दवान् वेपनश्चव्याकीर्णार्चिर्विशलभमरुद्यश्चनाशंप्रयाति । दीपःसंहतमूर्त्तिरायततनुर्निर्वेपनो दीप्तिमान्निःशब्दोरुचिरःप्रदक्षिणगतिर्वैदूर्य्यहेमद्युतिः । लक्ष्मींक्षिप्रमभिव्यनक्तिसुचिरंयश्चोद्यतंदीप्यते शेषंलक्षणमग्निलक्षणसमंयोज्यं यथायुक्तितः ॥ दीपंविना रात्रौ भोजनंनकार्यम् यवक्रीतरात्रौभोजनंमतिपार-

मूलम् ।

दीपोच्छिष्टो न तिर्यक् प्रत्यगुदक्शिराः न च दक्षिणमूर्द्ध न्यक्वाङ्ग- दैर्घ्यानुगतो न नग्नोऽनिषिद्धायां शय्यायां संविशेत् ॥ तत्र पठनीयमन्त्रा यथा ॥ ओँ नमोऽगस्तीश्वराय ॥ नमोऽगस्ती श्वरायेति यः प्रोच्य स्वपते नरः । तस्य कामा डराजेभ्यो न भविष्यति वै भयम् ॥ अपसर्प सर्पभद्रं ते दूरं गच्छ महा

टीका ।

स्कर वचनात् । सवत्योत्यदीपं प्रज्वाल्य ॥ शयीतेति ॥ याज्ञवल्क्यः ॥ उपास्य पश्चिमां सन्ध्यां हुत्वाग्नीं स्तानुपा- स्य च । भृत्यैः परिवृतो भुक्ता नातितृप्तोऽथ संविशेत् ॥ संविशेत् स्वप्यात् ॥ स्मृतिः ॥ आसनं वसनं शय्यां जाया ऽपत्यं कमण्डलुः । आत्मनः शुचिरेतानि न परेषां कदाचन अनुमतिं विनेति शेषः अन्यथाऽऽतिथ्यानुपपत्तेः ॥ अधी- यानश्चेति ॥ दक्षः । प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् । यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥ अत्र वेद पदमुपलक्षणमध्येतव्यशास्त्राणाम् यामद्वयं मध्यमं प्रहर द्वयं तस्य महानिशात्वे नानध्यायत्वात् ॥ अथ शयनविधि मुपक्रमते प्रक्षालितचरणहस्त्यादिना ॥ विष्णुपुराणे ॥ कृतपादादिशौचस्तु भुक्त्वा सायं ततो गृही । गच्छेच्छय्या मस्फुटितामेकदारुमयीं नृप ॥ नाविशालां न वा भग्नां नासमां मलिनां न च । न च जन्तुमयीं शय्यामधितिष्ठेदना

मूलम् ।

मुनिः । कपिलोमुनिरास्तीकःपञ्चैतेसुखशायिनः ॥ अस्तिंचार्तिमन्तश्चसुनीथंचापियःस्मरेत् । दिवावाथ दिवारात्रौनास्यसर्पभयंभवेत् ॥ योजरत्कारुणाजातो

टीका ।

स्तताम् ॥ प्राच्यांदिशिशिरःशस्तंयाम्यायामथवान्नृप । सदैवस्वपतःपुंसोविपरीतन्तुरोगदम् । विष्णुः । नार्द्रपादः स्वप्यान्नोत्तरापरशिरानननोनानुवंशंनाकाशेनपालाशे शयनेनपञ्चदारुकृतेनगजभग्नकृते नविद्युद्दग्धकृते न भिन्ने नाग्निप्लुष्टे नवटसिक्तद्रुमजे नश्मशानशून्यालय देवतागृहेषु नचपलमध्ये नगोगुरुहुताशसुराणामुपरि नोच्छिष्टोनदिवा नसन्ध्यायां नभस्मनिदेशेचनाशुचौ नार्द्रे नपर्वतमस्तके । उशना । नतैलाभ्यक्तशिराःशयीत पैठीनसिः ॥ नार्द्रोचितः कृष्णचर्मणिस्वप्यात् ॥ मन्त्रा इति ॥ नन्दिपुराणगोभिलमहाभारतस्थाएतेमन्त्राः ॥ प्रथममन्त्रे स्वमतेइत्यार्षः चरममन्त्रे मूर्द्धाशिंशवृक्षफलं यथेतिपाठान्तरम् । शिंशवृक्षः तिउराइतिप्रसिद्धइति बहवः ॥ निद्रांकुर्य्यादिति ॥ निद्रालक्षणंयोगसूत्रेपत- ञ्जलिराहअभावप्रत्ययालम्बनावृत्तिर्निद्रेति ॥ वैद्यकेतु हृदयंचेतनास्थानं तस्मिंस्तमसावृते सर्वप्राणिनःस्वपन्ति तदुक्तं सुश्रुते । हृदयं चेतनास्थानमुक्तं सुश्रुत देहिनाम् ।

मूलम् ।

जरत्कारो महायशाः । आस्तीकः सर्प्पसत्त्रेवः पन्नगा-न्योऽभिरक्षयत् ॥ तं स्मरन्तं महाभागा नमां हिंसितुमर्हथ ॥ सर्प्पापसर्प भद्रं ते गच्छ सर्प्प वनान्तरम् । जनमेजयस्य यज्ञान्ते आस्तीकवचनं स्मर ॥ आस्तीकस्य वचः श्रुत्वा यः

---

टीका ।

तमोऽभिभूतेर्तास्मिंस्तु निद्राविशतिदेहिनाम् ॥ निद्रा-हेतुस्तमः सत्त्वं बोधने हेतुरुच्यते । स्वभावएववाहेतुर्गरी-यान् परिकीर्त्यते ॥ तथा ॥ पुण्डरीकाक्षसदृशं हृदयं स्यादधोमुखम् । जाग्रतस्तद्विकसति स्वपतस्तन्निमीलतीति ॥ स्वप्न इति ॥ वैद्यके ॥ सर्वेन्द्रियव्युपरतौ मनोनुपरतं यदा । विषयेभ्यस्तदा स्वप्नं नानारूपं प्रपश्यति ॥ तत्र शुभफलाः स्वप्नाः ॥ यस्तु पश्यति वै स्वप्ने राजानं कुञ्जरं हयम् । सुवर्णं वृषभं गां वा कुटुम्बं तस्य वर्द्धते इत्यादयः ॥ पतनं दन्तकेशानां पक्वमांसस्य भक्षणम् । खरोष्ट्रमाहिषयानं तैलाभ्यङ्गश्च मृत्यवे ॥ इत्यादयस्त्वनिष्टफलाः ॥ सर्वाणि शुक्लान्यतिशोभनानि कार्पासभस्मौदनतक्रव-र्जम् । सर्वाणि कृष्णान्यतिनिन्दितानि गोहस्तिदेव-द्विजवाजिवर्जम् ॥ अधिकन्तु ग्रन्थगौरवभयान्नलिखितं स्वप्नाध्यायादौ द्रष्टव्यम् ॥ शान्तिविधिमिति ॥ याज्ञ-वल्क्येन प्रथमाध्याये स्नपनमस्य कर्तव्यमित्यादिभिः

मूलम् ।

सर्पोनिनिवर्त्तते ।. शतधाभिद्यतेमूर्द्धि शिरीषस्यफलं-
यथा ॥ अन्यानप्यात्माभिरुचितमन्त्रान्पठेत् ततोविष्णुं
नमस्कृत्येष्टदेवतांस्मृत्वानिद्रांकुर्य्यात् ॥ निद्रितश्चे-

टीका ।

षोडशभिः श्लोकैरुक्तंविनायकस्नपनविधिमित्यर्थः ॥
दारोपगमनविधिरिति ॥ धर्मपत्नीप्रसङ्गविधिरित्यर्थः
वात्स्यायनादीति ॥ आदिपदेननन्दिगोनर्दीयश्वेतकेतु
बाभ्रव्यघोटकमुखगोणिकापुत्र चारायणकुचुमारादीनां
कामशास्त्रकाराणांग्रहणम् ॥ धर्माविरोधेनेति ॥ अयं
भावः यथाअजीर्णादिदोषपरिहारेण प्रत्यहंभोजनेजनाः
प्रवर्त्तन्ते तथा अमत्याङ्गासहायादि दोषपरिहारेण व-
क्ष्यमाणरीत्यास्वदारेषुप्रवर्त्तेरन्निति ॥ तदाहभगवा-
न्मल्लनागः ॥ शरीरस्थितिहेतुत्वादाहारसधर्माणोहि
कामाः । फलभूताश्चधर्मार्थयोरिति ॥ उक्तञ्चकाम
भाष्ये ॥ धर्ममूलःस्मृतः स्वर्गस्तत्रापिपरमाःस्त्रियः ।
गृहस्थधर्मोदुर्वारोनराणां धर्मयत्नजः ॥ हिताश्चापत्य-
सन्तानैः स्त्रियस्त्विहपरत्र च । परंसम्प्रत्ययोभोगप्रव-
र्णार्थमेस्त्रियः ॥ तथा ॥ तृष्णानामिवह्निव्यर्थंनृणां
जन्मसुखद्विषाम् । दोषास्तुपरिहर्त्तव्याइत्याचार्यैःस्त्रि-
रीकृतमिति ॥ आपस्तम्बः ॥ 'सदानिशायांदाराम्प्र-

मूलम् ।

पश्चात् स्वप्नं किमपि पश्येत् तदा प्रातरुत्थाय देवद्विजेभ्यः शुभाशुभं निवेद्य याज्ञवल्क्यादुक्तशान्तिविधिं कुर्य्यात् ॥ अथ शयनप्रसङ्गाद्दारोपगमनविधिः ॥ रात्रा-

टीका ।

स्वलंकुर्वीत ॥ पैठीनसिः ॥ संवृते देशे मैथुनमाश्रयेत् ॥ सुरतगृहवर्णनं कामशास्त्रे कलाविलासे ॥ रम्यपक्षि-रवामन्दं नवचित्रकुलाकुलम् । सक्ताम्बूलार्हशयनं गृहं सुरतसुन्दरम् ॥ विष्णुपुराणे ॥ स्नातः स्रग्गन्धि-धृक् प्रीतो नाध्मातः क्षुधितोऽपि वा । सकामः सानुरा-गश्च व्यवायं पुरुषो व्रजेत् ॥ सानुरागइति ॥ यदातु विरा-गस्तदा किमप्यपदिश्यान्यत्र शेतव्यं नोपगन्तव्यं तथा च विरक्तलक्षणप्रस्तावे वात्स्यायनः ॥ मित्रकृत्यं चापदि-श्यान्यत्र शेतइति ॥ व्यवायो मैथुनम् ॥ वैद्यके ॥ नर्यान:षोडशाद्वर्षात् सप्ततेः परतो न च । आयुष्कामो-नरःस्त्रीभिः संयोगं कर्त्तुमर्हति ॥ मैथुने चोपवीतं पृष्ट-लम्बितं कार्यं निवीतं याज्ञ्यधर्मेष्विति विष्णुवचनात् ॥ मुदितामिति ॥ अनुरक्तामित्यर्थः ॥ विष्णुपुराणे ॥ नाक्षातां तु स्त्रियं गच्छेन्नातुरां न रजस्वलाम् । ना-निष्टां न प्रकुपितां नाप्रशस्तां न गर्भिणीम् ॥ नादक्षि-णां नान्यकामां नाकामां नान्ययोषितम् । क्षुत्क्षामा

मूलम् ।

वनिषिद्दसमये प्रथमे प्रहरे चतुर्थे वाऽलंकृतोऽनुलिप्तः प्रमुदितः सानुरागो वात्स्यायनादिमुनिगणगदितं रतितन्त्रं धर्माविरोधेन प्रयुञ्जानः परिहितरतवस्त्रः पृष्ठ-

टीका ।

मतिभुक्तां वा स्वयं मैथिगुर्णैर्युतः ॥ नान्ययोनावयोनौ वा नोप्रयुक्तौषधिस्तथा । देवद्विजगुरूणांच व्यवायी नाश्रमे भवेत् ॥ चैत्यचत्वरतीरेषु नचैवच चतुष्पथे । नश्मशाने नोपवने सलिलेषु महीतले ॥ प्रोक्तपर्वसु शेषेषु नैवभूपालसन्ध्ययोः । गच्छेद्व्यवायंमतिमान्नमू-त्रोच्चारपीडितः ॥ आतुरांरोगिणीम्, रोगिकाद्यंको पगमननिषेधो रोगिणीकर्मकोपगमननिषेधस्तु रोग-स्य संक्रमणीयत्वमतोतिकल्पतरुः युक्तं चैतत् एतान्न-षेधस्यदृष्टार्थत्वात् तेनयोरोगस्तदुपगमेनैवगम्यति तवो पगमेनदोषः । आविष्टां भूताद्याक्रान्ताम्, अन्ययोनौ पश्वादियोनौ अयोनौ स्त्रियामुखादौ पुंसोवागु-दादौ । अनेनच सर्वविषमौपरिष्टकंनिषिध्यते, औप-रिष्टकमुपरिष्टाद्वक्त्रंमुखरतमितितदर्थः । तच्चाष्टविधं निमित्तंपार्श्वतोदष्टंवहिःसन्दंशः अन्तःसन्दंशः चुम्बि तकंपरिमृष्टकमाम्रचूषितकंसङ्गरइतिभेदात् एतेषां लक्षणानिकामसूत्रेद्रष्टव्यानि, तत्रस्त्रीकपित्थापुरुष-

मूलम् ।

लम्बितयज्ञोपवीतोमूत्रोच्चारादिभिरपीड़ितः प्रहृष्ट-
कामः प्रहृष्टकामां मुदितामरजस्वलांसुरभिगन्धानुलि
प्तामयोनिदुष्टामलंकृतांप्रियांब्रह्मचर्यंकामकृतावेवसका

टीका ।

रुपिण्याच तृतीययाप्रकृत्या, कुलटास्वैरिणीपरिचारि-
कादिभिः स्त्रीभिरजातश्मश्रुपरिचारकनटनर्तकधनिक
वणिगादिबालकैः पुरुषैश्चसहसंभवतीत्यादिविस्तरेण
निरूपितं कामशास्त्रे एतच्चसर्वथैवनिषिद्धमशुचित्वा-
दसभ्यत्वाच्च अतएवकामशास्त्रप्रणेतावात्स्यायनोप्ये-
तद्विधीनुक्त्वा भूयोनिषिषेध, नत्वेतद्द्रष्टव्योविद्वा-
न्मन्त्री वा राजधूर्धरः । गृहीतप्रत्ययोवापिकारयेद्दौ
परिष्टकमित्यादिना ॥ ननु शास्त्रनिबद्धत्वादेवकर्तव्य
त्वमित्याशङ्कायामाहसएव ॥ न शास्त्रमस्तीत्येताव-
त्प्रयोगेकारणंभवेत् । शास्त्रार्थान् व्यापिनोविद्या-
त्प्रयोगांस्त्वेकदेशिकान् ॥ रसवीर्यविपाकाश्चिश्वमांस-
स्यापिवैद्यके । कीर्तिताइतितत्किंस्याद्भक्षणीयं विच-
क्षणैः ॥ नन्वेवन्तर्हितदुपदेशएवनिरर्थकइत्याशङ्का-
यामपिसएवाह ॥ सन्तेयवपुरुषाः केचित्सन्तिदेशा
स्तथाविधाः । सन्तिकालाश्चयेष्वेते योगानस्युर्निरर्थ-
काः ॥ पुरुषाधमिष्टादासहस्तिपकादयो येषामोपरि

टीका ।

एकप्रियग्रथिकादि स्वाधीनजीवनाः, देशाःसाकेतपां-
टलिपुत्रसिन्धुलाटादयः, कालाः तादृशजनसहवास-
चणाः ॥ तथा ॥ अर्थस्यास्थैर्य्यत्वाचलत्वान्मनस-
स्तथा । कःकदाकिंकुतः कुर्य्यादितिकोज्ञातुमर्हतीति
चलमधिकया ऽनुपयुक्तया कामशीर्ष्यविवेचनया ॥ प्रो-
क्तपर्वमु चतुर्द्दश्यष्टमीचैव अमावांस्याथपूर्णिमा । पर्वा-
ण्येतानिराजेन्द्र रविसंक्रान्तिरेवच ॥ स्त्रीतैलमांस
संभोगीपर्वस्वेतेषुवैपुमान् । विण्मूत्रभोजनं नामप्र-
याति नरकंमृतः ॥ इतिश्लोकोक्तेषु ॥ न मूत्रोच्चारपो
डितइति ॥ तथाविधस्य स्त्रीगमनंमूत्रशुक्राख्यव्याधि-
जनकम्, तदुक्तंसुश्रुते । प्रत्युपस्थितमूत्रस्तुमैथुनं योऽ
भिनन्दति । तस्यमूत्रयुतंरेतः सहसासंप्रवर्त्तते ॥ पुर-
स्ताद्वापिमूत्रस्य पश्चाद्वापिकदाचन । भस्मोदकप्रतीकाशं
मूत्रशुक्रन्तदुच्यतइति ॥ अरजस्वलामिति ॥ रजः
प्रवृत्त्यपपत्तिमाह सुश्रुते ॥ मासेनोपचितं कालेधमनी
भ्यांतदार्त्तवम् । ईषत्कृष्णं विगन्धञ्च वायुर्योनिमुखा-
न्नयेत् ॥ तद्वर्षाद्द्वादशात्कालेवर्तमानमसृक्पुनः ।
जरापक्वशरीर णांयातिपञ्चाशतः क्षयमिति ॥ द्वादशा
द्वर्षादितिप्रायिक मेकादशवर्षाणामपिरजः समन्तात् ।
वाग्भटटीकायांसर्व्वाङ्गसुन्दराख्यायामवचः दृष्टोऽप्यं वम्

टीका ।

अतिशीतदेशवासिनीनां द्वादशाधिककालेऽपि रजः प्रवर्तते । तस्मात्तत्तद्देशजलवायुस्वभावेनानियतो रजःसमयः कथमपि निश्चेतुमशक्यएव ॥ साचरजोदर्शनदिनात्पूर्णतत्रिरात्रं यावदशुचत्वाच्चतुर्थेऽह्नि स्नाताशुध्यत्यल्पायुरपत्योत्पत्तिशङ्कयावर्जनीया ॥ मनुः ॥ नोपगच्छेत्प्रमत्तोऽपि स्त्रियमार्त्तवदर्शने । समानशयनेचैवनशयीततयासह ॥ रजसाऽभिप्लुतांनारींनरस्याभ्युपगच्छतः । प्रज्ञातेजोयशश्चक्षुरायुश्चैवप्रहीयते ॥ अयोनिदुष्टामिति नोग्रेयादित्यधिकारेसुश्रुतः ॥ हीनाङ्गीकर्भिणीं[illegible] योनिदोषसमन्वितमिति ॥ योनिदोषास्तुविंशतिः ॥ तेचोक्ताःशार्ङ्गधरसंहितायाम् । विंशतिर्योनिरोगाःस्युर्वातोत्पित्तात्कफादपि । सन्निपाताच्चरक्ताच्चलोहितच्चयतस्तथा ॥ शुष्कावामिनीचैवखण्डितान्तर्मुखीतथा । सूचीमुखीविप्लुताचजातघ्नीचपरिप्लुते त्यादिभिःश्लोकैः सुश्रुते ॥ प्रहर्षिण्यपुरुषंयाऽत्यर्थमुपसेवते । कृशदुर्बलबालावाबालावावुःप्रकुप्यति ॥ सदुष्टोयोनिमासाद्य योनिदोषायकल्पते । अथवार्त्तपदोषार्ताग्रबाल्यंलभते ॥ विंशतिर्व्यापदोयोनेर्निर्दिष्टारोगसंग्रहे । मिथ्याचरितयाःस्त्रीणांप्रदुष्टेनार्तवेनच ॥ आवम्नोबीजदोषाच्चदेवाच्चशृणुताःपृथगित्युक्ता उदावर्ताबन्ध्याविप्लुतापरि

टीका ।

प्र ताचाप्रलाहधिरचरावामिनीसंसिनी पुत्रघ्नीपित्तला अत्यानन्दाकर्णिनीचरणार्द्धं ई ड्ड मला महतीफलिनी महायोनिःसूचीवक्त्रासर्वदोषजा २० इतिनामानिसर्वे निलमुदावर्तारजः कृच्छ्रे णमुञ्चतीत्यादिभिःश्लोकैर्लक्ष णानिचाभिहितानिविस्तरभयान्नलिखितानि ॥ योनि दुष्टादिस्त्रीगमनंपुंसउपदंशादि रोगजनकंतथाचोपदंश निदानेसुश्रुतः ॥ तत्रातिमैथुनादतिब्रह्मचर्य्याद्वातथा ब्रह्मचारिणींचिरोत्सृष्टांरजस्वलां दीर्घरोमांकर्कशरोमां सङ्कीर्णरोमां निगूढ़रोमामल्पद्वारांमहाद्वारामप्रियाम कामामचोक्ष सलिलप्रक्षालित. योनिमक्षालितयोनिं योनिरोगोपसृष्टांस्वभावतोवादुष्टयोनिंवियोनिंवानारी मुपसेवमानस्यतथाकरजदशनविषशूकनिपातनाद्दंता हस्ताभिघाताच्चतुष्पदीगमनाद्वोक्षसलिलप्रक्षालनाद् वपीड़नाच्छुक्रमूत्रवेगविधारणान्मैथुनान्ते वाऽप्रक्षाल नादिभिर्मेढ्रमुपगम्य प्रकुपितादोषाःक्षतेऽक्षतेवाश्वयथु मुपजनयन्तितमुपदंशमित्याचक्षतइति ॥ चोक्षमशु चिपममोक्षं वा ॥ माधवनिदाने ॥ हस्ताभिघातान्नख दन्तपातादधावनादत्युपसेवनाद्वा । योनिप्रदोषाच्चभ वन्तिशिश्ने पञ्चोपदंशाविविधोपचारैः ॥ योनिप्रदोषात् अल्पमहाद्वारदीर्घकर्कश रोमसंकीर्णदेशाद्यतिगमना

## टीका ।

इतितट्टीकायामातङ्कदर्पणवाचस्पतिः॥ सुरतंद्विविधं बाह्यमाभ्यन्तरंच बाह्यंत्वालिङ्गनाधरपानचुम्बननखक्षतादिभेदान्नानाविधंतदेवपूर्व्वंप्रयोज्यमुतदुक्तंकामशास्त्रे आदौरतम्बाह्यमिष्टप्रयुक्तंतवापिचालिङ्गनमेवपूर्व्वंमिति दृष्टमेमाधटोकायांमल्लिनाथेनप्रचुराभावचादीनामपि बाह्यरतत्वमुक्तम् ॥ चुम्बनस्थाना नकामशास्त्रे ॥ भुजमूलेस्तनौवक्षोर्वलिमर्दनमत्रच । कपोलौष्ठंचचुम्ब्यानि भार्य्यारतिविशारदैः ॥ नखक्षतस्थानानिरतिरहस्ये ॥ कण्ठकुक्षिकुचपार्श्वभुजोरःश्रोणिसविथपुनरास्पदमाहुरिति ॥ आभ्यन्तरन्तुचरमक्रियात्मकंतदुक्तंवारस्यायनेन । बाह्यमाभ्यन्तरंचेति द्विविधंरतमुच्यते । तत्राद्यं चुम्बनाद्यं पनखदन्तक्षतादिकम् ॥ द्वितीयंसुरतंसाक्षान्नानाकारैःप्रकल्पितमिति । तच्चशक्त्योरेकयामावधिकं तदुक्तं रतिसर्व्वस्वे । एकवारावधिर्यामोरतस्यपरमोमतः परतश्शक्तिमतोर्यूनोरद्भुतक्रमवर्त्तिनोरिति ॥ चापस्तम्बः स्त्रीवाससैवसन्निपातःस्यात् ॥ स्त्रीसम्भोगार्थंवासः स्त्रीवासोरतिवस्त्रं सन्निपातःसम्भोगः । कृतसम्भोगौचतौ तस्यांरात्रावेकशय्यायांनशयीयाताम् । यदाहसएव ॥ यावत्सन्निपातंचसहशय्याततोनानेति ॥ ऋतावेवेति ॥ याज्ञवल्क्यः ॥ षोडशर्त्तुनिशाःस्त्रीणांतस्मिन्युग्मासु

मूलम् ।

सर्वं दम्पतावपि वध्वाङ्घ्रिं प्रसार्य्यं मिथुनीभवेत् प्रथम र्तुगमने चैव वक्ष्यमाणोक्तविधिना गर्भाधानं कर्तव्यम् ॥

---

टीका ।

श्रमोग्लानिः पिपासादिर्विषमदनं शुक्रशोणितयोरवबन्धः स्फुरणं चयोनेः ॥ चरके ॥ पुरुषस्यानुपहतरेतसः स्त्रियाश्चाप्रदुष्टयोनिगर्भाशयाया यदा भवति संसर्गऋतुकाले यदातयोस्तथायुक्तसंसर्गशुक्रशोणितं संसृष्टमन्तर्गर्भाशय गतं जीवोऽपक्रामति सत्त्वसंप्रयोगात्तदा गर्भोऽभिनिवर्त्तत इति ॥ दम्पतावपीति ॥ याज्ञवल्क्यः ॥ यथाकामी भवेद्वापि स्त्रीणांवरमनुस्मरन्निति ॥ स्त्रीभिरिन्द्रस्य ब्रह्म हत्यायास्तृतीयांशं गृह्णीते भवतीनां कामविहन्तापात की स्यादिति इन्द्रदत्तं वरं स्मरन् स्त्रीणां काममनतिक्रम्य प्रवर्त्ततेत्यर्थः ॥ अंघ्रिप्रसार्येति ॥ दक्षिणेन पाणिनोरु प्रसार्य्येति पारस्करवचनात् ॥ प्रथमर्त्तुगमन इति ॥ यद्यप्याश्वलायन पारस्करगोभिलादिभिर्गर्भाधानसमय त्वेन प्रथमर्त्तुरेव नोक्तः तथापि प्रथमोपस्थितत्वागे साना भावात्प्रथमर्त्तुरेव गर्भाधानस्य मुख्यः समय इति व्याख्या तारो निश्चिन्वन्ति ॥ यदा तु विदेशस्थतया व्याधिततया च प्रथमर्तौ गर्भाधानं कर्तुं न शक्यते तदा विदेशागमनोत्तरं स्वस्थतादशायां च प्रथमर्त्तौ कार्यम् ॥ रजोदर्शनात्पूर्वन्तु

मूलम् ।

ऋतुगमनेच गर्भाधानहेतुतयोत्तानीकरणमेव शस्तं न तिर्य्यक्करणादि पुरुषायितन्तु नपुंसकोत्पत्तिहेतुतयाऽतिनिषिद्धम् ॥ तत उत्थाय स्त्रिया ऋतावृतौ च लेप क्षालनाचमने कर्तव्ये पुंसा च ऋतौ लेपक्षालनमङ्गानां प्रोक्षणमाचमनं प्रातः स्नानञ्च ऋतौ स्नानवर्जं सर्वं पूर्ववत् । गर्भिण्य पगमन निषेधः षष्ठाष्टममासयोरेवेति गौड़ाः

टीका ।

स्त्रीगमनं न कार्यम्, ऋतुमतीं जायामभिगच्छेदिति दारस्करीयात् । श्राद्धानन्तरं ऋतुस्नातामपि नोपेयात्तदाहतुः शङ्खलिखितौ । ऋतुस्नातां तद्दोरात्रं परिहरेदिति शारीरस्थानेसुश्रुतः ॥ ऊनषोड़शवर्षायामप्राप्तः पञ्चविंशतिम् । यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥ जातो वा न चिरं जीवेज्जीवेद्वा दुर्बलेन्द्रियः । तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् । एतद्दर्शनाज्ज्योतिःशास्त्रेऽपि षोड़शवर्षपर्यन्तं गर्भस्यानिष्टत्वकथनाच्च षोड़शवर्षपर्य्यन्तमन्तत्तश्चतुर्दशवर्षपर्यन्तं वा स्त्री नोपगन्तव्येति यद्वदन्ति तत्सम्प्रदायिका नानुमन्यन्ते दृष्टमात्रफलकाभ्यां वैद्यकज्योतिःशास्त्राभ्यामदृष्टार्थकस्य धर्मशास्त्रस्य बाधयितुमयुक्तत्वात् तथा च व्यासः ऋतुस्नातान्तु यो भार्य्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां

टीका ।

पततेनाविमगयइति ॥ अस्माकंपुनरित्थमत्रतर्कः ॥ षोडशवर्षपर्य्यन्तमृताहन्ना मक्रममक्रदुपगन्तव्यं नाति प्रसक्तव्यं तदनन्तरं यथेच्छमुपगन्तव्यं वैद्यकस्यापिषोडश वर्षपर्य्यन्तमतिप्रसंगदेनपेध एवतात्पर्य्यम्, बालायाः प्रदरादिरोगसंभवोप्यतिप्रसंगादेवसंभवति तदुक्तंसुश्रुते प्रवृद्ध लिंगंपुरुषयाऽल्पवयस्मुपसेवते । कुप्यदुर्बलबालाया स्तस्यावायुःप्रकुप्यतीत्यादि ॥ यदिदैववशात्सक्रदुपगमेपि षोडशवर्षाभ्यन्तरे गर्भोभवेत्तदा कार्त्तितः तादृशगर्भो त्पन्नानामपिबहूनांदीर्घायुषांदृश्यताञ्च दर्शनादिति ॥ उत्तानाकरणमिति ॥ सम्पुटाख्यबंधेनरमेतेयर्थः।तल्लक्षणं स्मरदीपिकायाम् उत्तानसुप्तप्रमदोपरिस्थः कटीसमा कृष्यजङ्घयुग्मम् । संमर्दयात:स्तनमण्डलंयद्रमेतमस्या त्किलसंपुटाख्यर्दात ॥ पुरुषायितमिति ॥ स्त्रियाः पुरुषवदाचरितंविपरीतमैथुनंतल्लक्षणंस्मरदीपिकायाम् लिंगोपरिस्थितानारी भूमौदत्त्वापदद्वयम् ।" इत्येदत्त हस्तावबन्धःस्याद्विपरीतकः ॥ ऋतुस्नातायास्तन्निषिद्धो ऽपितत्रैव । विपरीतरतोस्त्रीणामृतुस्नाता न गुर्विणीः योजयेत्कामशास्त्रज्ञः सद्योभुक्ताद्वियास्तथेति ॥ वराह मिहिरः ॥ न नखदशनविक्षतानिकुर्याद्दृतुसमयेपुरुषः स्त्रियाःकथञ्चित् ॥ एवंसंभुज्य निशान्तेचुम्बनालिंग

टीका ।

नादिभिःस्त्रियंसंभाव्यविसर्जयेत्तथाचगोनर्दीयः ॥ निशा
वमानेयदिचुम्बनादिप्रयुज्ययायान्मदनोऽस्यवासइति ॥
उत्थायेति । गौतमः । नमिथुनीभूयशौचंप्रतिविलम्बेत॥
वृद्धशातातपः ॥ ऋतौतुगर्भशङ्कित्वात्स्नानंमैथुनिनः
स्मृतम् । अनृतौतुसदाकार्यंशौचंमूत्रपुरीषवत् ॥ स्नान
मिदंकर्म्माधिकारापादकंतेनप्रातःस्नानं न रात्रौ ॥
मूत्रपुरीषवदिति ॥ अल्पलेपेमूत्रवत् बहुलेपेपुरीषव
दितिव्यवस्थितोविकल्पः । तथा । द्वावेतावशुचीस्यातां
दम्पतीशयनंगतौ । शयनादुत्थितानारीशुचिःस्यादशु
शुचिःपुमान् ॥ शुचिःस्नानप्रोक्षणंविनापीतिशेषः नतु
लेपक्षालनाचमनयोर्निवृत्तिरितिबोध्यम् ॥ गर्भिण्यु
पगमननिषेध इति ॥ गर्भवैगुण्यभयात्तदुपगमननिषेधो
वैद्यके आधानात्प्रभृत्येवोक्तस्तथाचसुश्रुते ॥ ततःप्रभृत्ये
वव्यायामंव्यवायमपतर्पणमतिकर्षणं दिवास्वप्नं रात्रि
जागरणंशोकंयानारोहणं भयमुत्कटकासनञ्चैकान्ततः
स्नेहादिक्रियां शोणितमोक्षणं चाकालेवेगविधारणञ्च
न सेवेतेति ॥ मिताक्षरायाम्विज्ञानेश्वरोप्येवम् ॥
शववाहतीर्थगमनसिंधुमज्जनक्षुरमाचरेन्नखलुगर्भिणीपति
रितिमुहूर्त्तचिन्तामणिश्लोकव्याख्यावसरेपीयूषधारायां
गोविन्दस्तु सप्तममासादूर्द्ध मेवनिषेधमाह वपनंमैथुनं

मूलम् ।

एतावत्यप्याह्निके कृते न प्रत्यवायो भवति अन्यथातुप्रत्य वैत्येव ॥ आसीत्खण्डवलाकुलेऽमलयशावेदेऽङ्गदेशाधिपः शूरोदण्डकरोवरोद्विजगणे श्रीछत्रसिंहोनृपः । तस्मा

टीका ।

तीर्थं वर्ज्जयेद्गुर्विणीपतिः । आद्यस्तमसमान्मासाद्‌दूर्द्ध्वन्ना न्यववेदविदितिनारदीयात् ॥ अत्यन्तकामान्तुप्रौढ़गर्भा मप्युपेयात् अद्यश्वोवाविजनिष्यमाणाःपतिभिःसहश यन्तइतिस्त्रीणामिन्द्रदत्तोवरइतिवसिष्ठवचनात् काम माविजनितोः सम्भवामितिश्रुतेश्च ॥ विजनिष्यमाणाः प्रसविष्यमाणाः शयन्तेशयीरन् आर्षोलट्रूड़भावश्च ॥ ननुमैथुनेस्त्रियाअपि शुक्रस्रावाद्गर्भपातः संभवतीति गर्भिण्युपगमननिषेधः सर्वथैवयुक्तइतिचेन्न तस्याकिञ्चि त्करत्वात् तदुक्तंबृहन्निघण्टुरत्नाकरे ॥ योषितोऽपि स्रवत्येवशुक्रंपुंसांसमागमे । गर्भस्यतु न तत्किञ्चित्करो तीति न चिन्त्यतइति ॥ एतावतीति ॥ ब्रह्मपुराणे । इत्येतदखिलंप्रोक्तमहोरात्राश्रितंमया । ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम् ॥ नास्तिक्यादथवाऽऽलस्या द्ब्राह्मणोनकरोतियः । सयातिनरकंघोरंकाकयोनौ च जायतइति ॥ अथ ग्रन्थान्तेविभिः श्रीमचन्द्रवतो देव्यावंशवर्णनमुपक्रमते आसीत्खण्डवलाकुलइति ॥१॥

मूलम् ।

तस्मिन्मिथिलेश्वरात्समजनि श्रीरुद्रसिंहावरः श्रीमानेक जटासमर्चनपरः श्रीवासुदेवोऽपरः ॥ १ ॥ येनापारि पुरारिपादकमले भक्त्यावलोनिश्चला येनाधारि सदारि मूर्ध्नि चरणो जित्वारणस्वाहलात् । येनास्मरारिहरिः स्थिराच कमलाऽकार्यालये निर्मलाभूपालावलिमौलि वन्दितपदाराजन्वतीभूरभात् ॥ २ ॥ तत्पत्नीत्तमयाऽ वनीमुवपुषालन्मींगिराभारती याश्रीचन्द्रवतीसतीगुण वती संराजतिश्रीमती । आत्तप्रिनतयाऽनयाविनतया प्रख्यातयादान्तया प्राणार्घ्यवमयामुपहृतिरियं साप्रीय तामेतया ॥ ३ ॥ सद्विल्ववामकुलभूधरभास्वरेण यामा

टीका ।

राजन्वतीति ॥ शोभनोराजाअस्याइतिविग्रहे राजन्वा न्सौराज्यइतिसूत्रेण राजशब्दान्मतुपि नलोपाभावो निपात्यते ॥ २ ॥ एतयेति ॥ एतयापहृत्यामापूर्वोक्ता देवीप्रीयतामित्यन्वयः ॥ नन्वचान्वादेशत्वे नैनयेति स्यादितिचेन्न अनुवाद्यत्वं न विवक्षितत्वात् अपूर्वंबोध यितुमुपात्तस्यकार्यान्तरंविधातुं पुनरुपादानस्यैवान्वा देशपदार्थत्वात् अतएव ईपदर्थक्रियायोगमर्यादाभि विधौचयः । एतमातंङिर्तविद्यादाक्यस्मरणयोरङि दितिश्लोके एतमित्यत्रैनादेशोन एवंनक्तंभीकरंयंत्वमेव

मूलम् ।

विराट्तरुवनीमुविकस्वरेण । अज्ञानतामसहृताचक्र पापरेणप्राकारिपद्धतिरियंपरमेश्वरेण ॥ ४ ॥ वसुमुनि नगशशिशाके १७७८ पौषसितेपचतौममोत्पत्तिः । गुणरामवर्षवयसाविप्राह्निकपद्धतीरचिता ॥ ५ ॥ शकाब्दे भूगोबाणमुद्बिधुमितिचैत्रधवले तिथौकार्येवारे शुभकरवरारिवक्तुवले । समाप्तोऽयंग्रन्थःसरससमयेमङ्गल तलेऽस्तुदारे श्रीतारावरणकमलेन्यामिविमले ॥ ६ ॥ इति कर्म्मकाण्डोद्धारकमहावैयाकरण श्रीपरमेश्वर विरचिताऽऽह्निकपद्धतिः समाप्ता ॥ शुभमस्तु ॥ * ॥

---

टीका ।

तदिमंराधेगृहंप्रापयेति गीतगोविन्दश्लोकेऽपीमर्मित्यत्र नैनादिशदतिबोध्यम् ॥ ३ ॥ सद्बिल्ववासकुलेति ॥ बिल्ववामकुलं मिथिलायां बलिग्रामइतिप्रसिद्धम् ॥ तरुवनीति ॥ तरौनीइतिप्रसिद्धोग्रन्थकर्त्तुर्निवासग्रामः प्राकारीति ॥ प्रकथनार्थकात्प्रकरोतेः कर्म्मणिलुङ् ४ पचताविति ॥ पचस्यमूलेप्रतिपदीत्यर्थः ॥ ५ ॥ कार्ये इति ॥ कोब्रह्मादेवता अस्यकार्यः कस्येदितिसूत्रेण कशब्दस्येदादेशोऽण्च । तिथिशब्दःपुंलिङ्गोऽपितिथयो द्वयोरित्यमरकोशात् । तथाचभारविःअभिरश्मिमालि विमलस्यधृतजयधृतेरनाशुषः । तस्यभुविवहुतिथास्ति

टीका ।

यय: प्रतिजग्मुरेकचरणांनिषीदतइति ॥ पव स्तोत्वं वहुतिथाइत्यवटिप्पाण्डौदिबैदुतिथ्यइतिस्यात् ॥ वराद इति ॥ वरआरोमङ्गलवारस्तस्मिन् । शेषंसुबोधम् ॥६॥

इतिकर्म्मकाण्डोद्धारकमहावैयाकरण
श्रीपरमेश्वरकृतः स्वौयाह्निकपद्धतिप्रकाशः
समाप्तः ॥

शुभमस्तु ॥ श्रीरस्तु ॥



ओं सौरभेय्यः सर्वहिताः पवित्राः पुण्यराशयः। प्रतिगृह्णन्तुमेग्रासं • गावस्त्रैलोक्यमातरः ॥ ओं गोभ्योनमः ॥ इति साग्रं ग्रासमुद्दिष्टं पश्यगामुद्दिश्यदद्यात् ॥ ४१ ॥

इदमन्नं मनुष्येभ्योहन्त४० भूमिमभिषिच्य तदुपरि बलीन्दत्त्वा पुनरभिषेच येत्सर्व्वान्बलीननुपश्यप्रशि ॥ ओं श्वानौद्वौश्यावशबलौ वैवस्वतकुलोद्भवौ ताभ्यां पिण्डं प्रयच्छामिस्यातां मेतावहिंसकौ ॥ ३८ ॥ ओं ऐन्द्रवारुणवायव्यायाम्यावैनैर्ऋताम्नया । वायसाःप्रतिगृह्णन्तुभूमौपिण्डमयार्पितम् ॥ ३७ ॥

ओंकृमिभ्योनमः ३६

ओंवायसेभ्योनमः ३५

ओंपापरोगिभ्योनमः ३४

ओं श्वपचेभ्योनमः ३३

ओंपतितेभ्योनमः ३२

ओंजिह्मेभ्योनमः ३१

ओंचाण्डालेभ्योनमः ३०

ओंश्वभ्योनमः २९

अथ वाजसनेयिनां पञ्चमहायज्ञप्रकारः ।

ओं प्राच्यै दिशे नमः १५

ओं वायवेनमः ११

मणिकाख्यं जलपात्रं अत्र प्रतिष्ठापयेत् ।

ओंविधात्रेनमः१० ओंधात्रेनमः९

ओं अनुमतयेस्वाहा ५

ओं कश्यपायस्वाहा ४

ओं गृह्याभ्यःस्वाहा ३

ओं प्रजापतयेस्वाहा २

ओं ब्रह्मणेस्वाहा १

पुटकस्यजलेस्थले वा

ओं पृथिव्यै नमः ८

ओं अद्भ्योनमः ७

ओं पर्जन्यायनमः ६

ओं विश्वेभ्योभूतेभ्योनमः २३

ओंभूतानांपतयेनमः २५ ओंविश्वेभ्योदेवेभ्योनमः२२

ओं उषसेनमः २४ ओं सूर्यायनमः २१

ओं अन्तरिक्षायनमः २०

ओंउदीच्यैदिशेनमः १८ ओंब्रह्मणेनमः १९ ओंअपाच्यै दिशेनमः १६

ओंवायवेनमः १४ ओंवायवेनमः १२

अपसव्यं न दक्षिणाभिमुखः

ओं पितृभ्यःस्वधानमः २७

अन्नपात्रं प्रक्षाल्य ओंयक्ष्मैतत्तेनिर्णेजनंनमः २६

ओं प्रतीच्यै दिशेनमः १७

ओं वायवेनमः १३

अन्नपात्रम् जलपात्रम्

नित्यश्राद्धम् ॥ ३९ ॥ सेकः, संकल्पः, गायत्रीः, देवताभ्यः, आसनम्, आयन्तुनः, गन्धादिदान अन्नदानं पात्रे, पात्रालम्भनम्,• तत्तन्नामगोत्रोच्चारणे नान्नोत्सर्गः, देवताभ्यः, ब्राह्मणायतद् ओं प्रमादात्कुर्वताम्, ॥ इति हृष्टनित्यश्राद्धप्रयोगः ॥ मध्यमप्रयोगस्तु ॥ अपसव्यं कृत्वामोदक दाय दक्षिणाभिमुखः ओं अद्यामुकगोत्राः पितृपितामहप्रपितामहा अमुकामुकामुकशर्माण इ इत्युत्सृजेत् ॥ लघुप्रयोगस्तु ओं इदमन्नं पितृभ्यःस्वधा॥ इतिनित्यश्राद्धम् ॥ पार्वणादिमे [illegible] किन्तु वैश्वदेवबलिदानमेव ॥